श्रीगणेशायनमः ॥ पद्यं ॥ लक्ष्मींतनोतुनितरामितरानपेक्षमंघ्रिद्वयंनिगमशाखिशिखाप्रवालं ॥ हेरंबमंबुरुहडंबरचौर्य 
निघ्नंविघ्नाद्रिभेदशतधारधुरंधरंनः ॥ १ ॥ उच्चैर्गतिर्जगतिसिध्यतिधर्मतश्चेत्तस्यप्रमाचवचनैःकृतकेतरैश्चेत् ॥ तेषांप्रकाशन
दशाचमहीसुरैश्चेत्तानंतरेणनिपतेत्कनुमत्प्रणामः ॥ २ ॥ वाल्मीकिगीतरघुपुंगवकीर्तिलेशैस्तृप्तिंकरोमिकथमप्यधुनाबुधा
नां ॥ गंगाजलैर्भुविभगीरथयत्नलब्धैःकिंतर्पणंनविदधातिजनःपितृणां ॥ ३ ॥ गद्यानुबद्धरसमिश्रितपद्यसूक्तिर्हृद्याहिवा
द्यकलयाकलितेवगीतिः ॥ तस्माद्दधातुकविमार्गविदांसुखायचंपुप्रबंधरचनांरसनामदीया ॥ ४ ॥ वाचंनिशम्यभगवानथ
नारदस्यप्राचेतसःप्रवचसांप्रथमःकवीनां ॥ माध्यंदिनायनियमायमहर्षिसेव्यांपुण्यामवापतमसांतमसांनिहंत्री ॥ ५ ॥ ग० ॥ तत्र
कंचनक्रौंचमिथुनादेकंपंचशरशरानुविद्धमपिव्याधेनानुविद्धंनिध्यायतःबद्धानुकंपस्यभगवतोवाल्मीकेर्वदनारविंदाच्छंदोमयीका

॥ ॥ टिप्पण ॥ ॥ १ अधीनं २ वज्र

चिदेवं निःससारस्सरस्वती[१] ॥ प० ॥ मानिषादप्रतिष्ठांत्वमगमः शाश्वतीः समाः ॥ यत्क्रौंचमिथुनादेकमवधीः काममोहितं ॥ ६ ॥ ग० ॥ तदनुस
मयोचितकृत्यं निर्वर्त्य स्वाश्रममुपगतवति सति भगवति वाल्मीकौ ॥ प० ॥ वाणीविलासमपरत्र कृतोपलंभमंभोजभूरसहमान इवाविरा
सीत् ॥ आभाति यत्कृतिरनेकविधप्रपंचव्याजेंद्रजालविधिसाधकपिच्छिकेव ॥ ७ ॥ ग० ॥ ततः परमहर्षेण महर्षिणा विधिवदभ्यर्चि
तः परमेष्ठी मध्यमलोके पिस्वकृतं प्रकाशयितुं किल भवंतमेवोपदिष्टमानया भारत्या रामचरितं यथाश्रुतं व्याक्रियतामिति व्याहृत्यांतरधा
त् ॥ पद्यं ॥ अथ सरसिजयोनेराज्ञया रामवृत्तं करबदरसमानं प्रेक्ष्य दृष्ट्या प्रतीच्या ॥ शुभमतनुत काव्यं स्वादु रामायणाख्यं मधुमयभ
णितीनां मार्गदर्शी महर्षिः ॥ ८ ॥ ग० ॥ एनं प्रबंधं प्रयोक्तुं लोके कः समर्थ इति चिंतामुपगतवति सति भगवति वाल्मीकौ ॥ प० ॥ उपाग
तौ मिलितपरस्परोपमौ बहुश्रुतौ श्रुतिमधुरस्वरान्वितौ ॥ विचक्षणौ विविधनरेंद्रलक्षणौ कुशीलवौ कुशलवनामधारिणौ ॥ ९ ॥ ग
द्यं ॥ एतौ मुनिः परिगृह्य स्वकृतिं अपाठयत् ॥ तौ पुनः इतस्ततो गायमानौ दृष्ट्वा रामः प्रहृष्टमनाः स्वभवनमानीय भ्रातृभिः सह

॥ टि० ॥ ॥ १ वाणी

लममर्त्यास्वागतं सांप्रतं वः शमितदनुजदंभा किंनु दंभोलिकेलिः ॥ अपिधिषणमनीषा निर्मिता नीतिमार्गा स्विदशनगर्योगक्षे
मकृत्यैक्षमंते ॥१७॥ ग० ॥ एवं भगवतः कुशलानुयोगपुरःसरीममृतामारसरसां सरस्वतीमाकर्ण्य संपूर्णमनोरथा सुमनसां सं
सत्पुंसे परस्मै विज्ञापयामास ॥ देव कथमकुशलमाविर्भवेद्भवताकृतावलंबानामस्माकं ॥ किंतु ॥ पद्यं ॥ अस्तिप्रशस्तविभवै
र्विबुधैरलंघ्या लंकेति नाम रजनीचरराजधानी ॥ माणिक्यमंदिरभुवां महसां प्ररोहैस्तेजस्त्रया यादिनदीपदशां दिशंती ॥१८॥
एनां पुराणनगरीं नगरीतिसालां सालाभिराम भुजनिर्जितयक्षराजः ॥ हेलाभिभूतजगतां रजनीचराणां राजा चिरादवति रा
वणनामधेयः ॥१९॥ यद्बाहुराहुरसनायितशस्त्रधारा दिक्पालकीर्तिमयचंद्रमसं ग्रसंते ॥ तद्वैरिणां रणमुखे शरणप्रदायी
नैवास्ति कश्चिदमुमंतकमंतरेण ॥२०॥ अंभोजसंभवममुं बहुभिस्तपोभिराराधयन्वरमवापपरैर्दुरापं ॥ तस्मात्समस्तभुवनं निज

३

॥ ॥ टिप्पण ॥ । १ बृहस्पतिः २ अलब्धस्यप्राप्तिर्योगः । लब्धस्यपरिपालनं क्षेमं

शासनस्य लक्ष्मीकरोति रजनीचरचक्रवर्ती ॥ २१ ॥ ग० ॥ तेन वयं परगधानाद इव भयामः ॥ तथाहि ॥ सोयं कदाचन क्रीडाधराधरमधिरु
ह्य सावरोधवधूजनश्चरणाभ्यां ततइतः संचरेच्चेदागमिष्यत्यागइन्यनाविष्कृतातपोभयेन भगवान्सहस्रभानुरपि संकुचितभानुरेव त
त्सानूनि नूनं समाश्रयते ॥ एष मृगांकोपि मृगयायासपरिश्रांतविश्रांत्यै ससंभ्रमं न मज्जनपरिवृतेन मज्जनगृहाभिमुखेन निर्जितश
तमखेदशामुखेन तत्रत्यविचित्रतरशातकुंभस्तंभाग्रप्रत्यग्ररत्नकमस्फटिकशिलाशालभंजिकापुंजकरतलकलितानिजोत्पलमयक
लशामुखादच्छाच्छामविच्छिन्नपातां बुधारां निजकराभिमर्शादापादयन्नतस्य प्रसादपिशुनानां भुनामेरचिरकांक्षिकानां
विंशतिर्वीक्षणानां क्षणमात्रं पात्रं भवति ॥ तेन पुलस्त्यनंदनेन संक्रंदननंदनवनात्स्वमदिरोद्यानमानीतस्य मंदारद्रुमुखस्य
वृंदारकतरुवृंदस्य बंदीकृतस्फारस्कंदरीनयनेंदीवरद्वंद्वात्करारविंदकनककलशाच्च मंदोष्णं स्यंदमानैरंबुभिर्जंबालिताल
वालस्य पचेलिमानामपि कुसुमानां पतनभयमाशंकमानाः पवमानाः सततं परिस्पंदितुमपि प्रभवो न भवंति ॥ एतेपि पावका

रूढिशकाहुतवहाग्व्योवहंतमत्र दृहंगार्हपत्यपुर भग:पागंगवीधुरदर्धाति ॥ किंबहुना ॥ सम्यमानवादवमान आगामिष्य 
नीत्यमन्नानमत्तदितेररवध्यत्वं चतुराननवराल्लब्ध्वा समुद्धतः सप्रतिसंग्रहारसमाक्रांतदिगंतदंतावलदंतकुंतव्रणकिणस्थ
पुटितवक्षस्स्थलः स्थलकमालिनीवनवारणइवरावणस्त्रिलोकीमभिभवन्भवदीयानित्यस्मान्नतानुकिंचिदपिजानातीति॥
अथभगवानाकर्ण्यगीर्वाणगणवाणीं ॥ पद्यं ॥ इंद्रनीलाचलोदंचच्चंद्रिकाधवलस्मित ॥ वाचमुच्चेसुधाधारामधुरांमधुसू
दनः ॥ २२ ॥ गद्यं ॥ भवतामपराधविधायिनस्तस्ययातुधानस्यनिधनमधुनैवविधातुंशक्य ॥ किंतुसरसिजासनशासन
मव्यमोघं कुर्वन्नुर्वीतले पुत्रीयतः स्कन्नामित्रस्य दशरथस्य मनोरथमपिपूरयितुमादृतमानुषवेषः सन्नहमेवतंवधिष्या
मीत्यकत्वांतरधात् ॥ ततःसापसरपदनिमिषाणामुन्मिषितहर्षाणां हृषीकेशादेशात्प्रशमितदुर्दशानिनिर्दशाननानिचतुर्दश
॥ ॥ पिपरा ॥ ॥ १ तुंगेन

भुवनानिबुध्वादुग्धसागरान्निरगात् ॥ ततस्तानमरान्ब्राह स्मपितामहः ॥ भवंतस्तावद्वनरिष्यंतांलक्ष्मीसहायस्यसहाय्या
र्थमप्सरःप्रभृतिषुयुवतिषुवानरभल्लगोपुच्छवेषभृतःप्रथितप्रभावाःप्रजाःप्रजनयेयुरिति ॥ पुराखलुममजृंभारंभसंभृतांजा
लुवानिति ॥ ततस्तेगीर्वाणास्तथाकुर्वन् ॥ अथवैतानाद्वैश्वानरान्नरःप्राजापत्यःसहेमपात्रःकश्चिदुत्थायदशरथायपुत्रीयंपायस
ममृतप्रायंप्रायच्छत् ॥ ततः ॥ पद्यं ॥ कौसल्यायैप्रथम मदिशद्भूपतिःपायसार्धंप्रादादर्धंप्रणयमधुरंकैकेय्यैद्रम्यपुंस्य ॥ एतदत्यातल्प
मनसःपत्युरालोच्यभावंस्वार्धांशाभ्यांस्वयमकुरुतांपूर्णकामांसुमित्रां ॥ २३ ॥ अवभृथेऽवसितेमखपूततदाद्यथायथमनुच्चलितेजने ॥ द
शरथःपरिपूर्णमनोरथःपुरमगात्पुरुहूतपुरोपमां ॥ २४ ॥ अपाटवात्केवलमंगकानांमनोज्ञकांतेर्महिषीजनस्य ॥ शनैःशनैःशोषितभूष
णानिचकारशिरोदोहदलक्षणानि ॥ २५ ॥ मंदमंदमपयाद्वलित्रयीगाधताविशयनाभिगह्वरा ॥ कौसलेंद्रदुहितुःशनैरभज्जत्स्यसारटिरपि

॥ ॥ टिप्पणं ॥ ॥ १ असामर्थ्यात् २ शोषितानि

दृष्टिगोचरा ॥ २६ ॥ न्यग्रोधपत्रसमतां क्रमशः प्रयातामंगी चकार पुनरप्युदरं कृशाङ्ग्याः ॥ जीवातवे दशमुखोरगपीडितानां ग
र्भच्छलेन वसता परमेण पुंसा ॥ २७ ॥ अपि च ॥ मध्यं तनुत्वादविभाव्यमानमाकाशमासीदमितायताक्ष्याः ॥ गर्भोदये विष्णुपदापदेशा
त्कार्श्यं विहायापि विहाय एव ॥ २८ ॥ उच्चस्थग्रहपंचके सुरगुरौ सेंदौ नवम्यां तिथौ लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि ॥ निर्दग्धुं
निखिलाः पलाशसमिधो मेध्यादयोध्यारणेराविर्भूतमभूतपूर्वमभवद्यत्किंचिदेकं महः ॥ २९ ॥ अपि च ॥ अथ रामाभिधानेन कवेः सु
रभयन्गिरः ॥ अलंचकार ―― कारुण्याद्र घृणामन्वयं हरिः ॥ ३० ॥ तमेव मन्वजायंत त्रयस्त्रेताग्नितेजसः ॥ अग्रजं ते नु कुर्वंत
स्तैस्तैर्लोकोत्तरैर्गुणैः ॥ ३१ ॥ भरतस्तेषु कैकेय्यास्तनयो विनयोज्वलः ॥ अन्यौ लक्ष्मणशत्रुघ्नौ सुमित्रायां कृतोदयौ ॥ [३२] एते वद्धिर्मी
राः प्रजाक्षेमायदीक्षिताः ॥ लोकानंदा मुकुंदस्य चत्वार इव बाहवः ॥ ३३ ॥ गद्यं ॥ अथ कदाचिदपरिमेयमायाभयानकयुद्ध

॥ ॥ टिप्पणं ॥ ॥ १ वटः गरुडश्च २ जीवनरक्षणाय ३ आकाश

समुद्गतदैन्यवलावस्कंदकोंदिशीकर्दरकार्नाकर्नीतिपाल्यमानमहारथः पंक्तिरथन्तपश्चर्यां जानानां मा श्चर्याणामायतनं त्रिशं
कुयाजिनं भगवंतं पद्यप्रबंधमिवदर्शितसर्गभेदं प्राकृतव्याकरणमिवप्रकटितवर्णव्यत्यासं बुधमिवसोमसुतं कुशिकसुतमद्रा
क्षीत् ॥ तदनुयथाविधिपरिगृहीतसपर्यणमर्यादातीतमहिम्ना गाधितरहृदयेन गाधिनंदनेनसवपरित्राणार्थं मिथ मभ्यर्थितःपार्थि
वो भूत् ॥ राजन् तवकुमारेण विनयाभिरामेण रामेण शरासनमित्रेण सौमित्रिमात्रपरिजनेन क्रियमाणकतुरक्षो रक्षोदुरितदुर्ना
र्यकृतार्थभूयोभवितुमभिलषामीति ॥ एवंविधमाकर्ण्यकर्णपरुषं महर्षिभाषितं ॥ अतिमात्रपुत्रवात्सल्यात्कोसल्याजानिःस्र
शल्यांतःकरणोभूत ॥ ततस्तस्मिन्बहुप्रकारैरपरिहार्यनिश्चयं भगवति विश्वामित्रेदशरथस्तपनकुलहितेनगुरुणा हितेनैवमभि
हितोभूत ॥ पद्यं ॥ पर्याप्तकामायमभ्यागतमुष्मैकुर्यात्सपर्यांकुशिकात्मजाय ॥ निर्यातु धानां वस्कधां विधातुं निर्यातुराम

॥ ॥ टिप्पण ॥ ॥१भयद्रुत २ दश ३ चद्र वर्धीन ४ विश्वामित्र ५ आगध ६ दीक्षांतस्नान ७ सत्कीर्ति

सहलक्ष्मणेन ॥ ३४ ॥ ग० ॥ एवंवसिष्ठेनप्रतिष्ठापितधृतिर्दशरथः सुतप्रदानेनकुशिकसुतमनोरथमेवपूरयामास ॥ पद्यं ॥ यो
गेनलभ्योयः पुंसांसंसारापेतचेतसां ॥ नियोगेनपितुःसोयंरामःकौशिकमन्वगात् ॥ ३५ ॥ तत्रसत्रंपरित्रातुंविश्वामित्रोमहामुनिः ॥
सौमित्रिसहितंराममनयज्जयमवोचत ॥ ३६ ॥ बलेनतपसांलब्धेबलेत्यतिबलेतिच ॥ विद्येतेमयिकाकुत्स्थविद्येनेवितरामिते ॥ ३७ ॥
गद्यं ॥ ततःपरिगृहीतविद्यस्यदाशरथेःप्रदेशमेकंप्रदर्श्यभगवानित्थमकथयत् ॥ पद्यं ॥ अस्मिन्पुरापुरभिदःपरमेश्वरस्यफालांत
गलनयनज्वलनेमनोभूः ॥ सद्यःप्रपद्यशलभत्वममुंचदंगंतस्मादमुंजनपदंविदुरंगसंज्ञं ॥ ३८ ॥ गद्यं ॥ तदनुमानससरःप्रसू
तांसरयूमतिक्रम्यवृत्रवधप्ररूढदृढश्रवःपंकक्षालनलब्धमलदकरूशकनाम्नोर्जनपदयोः सीम्निकृतपदयोर्दाशरथ्योः पुन
रप्येवमब्रवीत् ॥ पद्यं ॥ यक्षःसुकेतुर्द्रुहिणप्रसादाल्लेभेसुतांकामपिताटकाख्यां ॥ स्कंदःकिलैनांपरिणीयतस्यांमारीचनाचंजन

॥ ॥ टिप्पणं ॥ ॥ १आज्ञयायोगाभावेनच २कपालमध्ये ३पतंगत्व ४ब्रह्मदेवस्य ५विबाध

याबभूव ॥ ३९ ॥ गद्यं ॥ एकदा तु सुंदे निहते मारीचः कुंभसंभवमुनिमभिभूय तस्य शापादवापकोणपतां ताटका प्यार्गात्युरुषादिनी ॥ सय्
मा जन्मसिद्धसिंधुरसहस्रप्राणा जनपदविपदं विदधाना व्यापादनीया त्वयेति ॥ किंच ॥ वरोचनीमंथरगंवस्कंधगपरगपथुरंधरां तुरंद्ररेण
निहतां जनार्दनकृतार्दनां च भार्गवजननीमदक्षयं दाशरथेरमंदां स्कंदवधूवधचिकित्सामुन्मादयानास ॥ पद्यं ॥ आश्रुतः श्रुतयत्नेन ते
न सुंदप्रियावधः ॥ तमेवान्ववदत्तस्य चापः सिंजारवच्छलात् ॥ ४० ॥ तत्कालोपस्थिताशनाशापिशुनासंध्येव काचिन्मुनेरध्वानं तरसा
रुरोध रुधिरक्षोदारुणा दारुणा ॥ स्वार्थनिहनने पुर्गी विदधती मृत्याः स्वच्छंदस्यात्ययाक्रिडल्लिंकरसंघसंकटमहश्रृंगाटकोनाट
का ॥ ४१ ॥ यथा दाशरथेः कर्णमाविशत्ताटकागुणः ॥ तथा धनुर्गुणस्तूर्णमाविशत्तज्जिघांसया ॥ ४२ ॥ ततो नादिनिस्संख्या
मेवद्रुश्रद्भुस्य ताटका ॥ स्वप्राणैरामबाणस्य वीरपानमकल्पयत् ॥ ४३ ॥ मुनिः कृशाश्वोपज्ञानि ताटकामाथिने ददौ ॥ ...

॥ टिप्पण ॥ ॥ १ राक्षसतां २ राक्षसी ३ गजः ४ मार्ग ५ चतुष्पथः ६ आयं ज्ञानं

चं० रा० जृंभकादीनिजंभशासनशासनात् ॥ ४४ ॥ गद्यं ॥ तत्र कंचनविरिंचिलोकप्रत्यादेशं प्रदेशमेकं प्रदर्श्यावोचदुपचर्यमानपरमहर्षिमह बा० कां०
७ र्षिः ॥ पद्यं ॥ प्रतिदिनमवेदान्तैर्ब्रह्मभिर्ब्रह्मनिष्ठैः प्रशमितभवखेदैः सादरं सेव्यमानः ॥ बलिनियमनहेतोर्वामनः काननेऽस्मिन्नबालि
नियमपरः सन्ब्रह्मचारी चचार ॥ ४५ ॥ अपिच ॥ अपहृतविबुधार्तेर्वामनव्याजमूर्तेरखिलभुवनभिक्षोराश्रमानोकहानां ॥ ततिरियमति
नीलच्छायानादिव्यामर्त्यानामन्वयमपि परिमातुं लोकमभ्युद्यतेव ॥ ४६ ॥ इति विविधरसाभिः कौशिकव्याहृताभिः श्रुतिपथमधुराभिः पा
वनीभिः कथाभिः ॥ गलितगहनकलंगच्छतो दाशरथ्योः समकुचदिवसधस्माद्दशांमार्गदैर्घ्यं ॥ ४७ ॥ गद्यं ॥ ततः सिद्धाश्रमं प्रविश्य
विश्वामित्रः सत्रमारभत ॥ तदनंतरमंतरिक्षांगणादापतंतमंतकानीकभयानकं पलाशगणमवलोक्य पलायमानाः करतल
गलितपलाशसमित्कुशाः कौशिकनंदनांतेवासिनः ससंभ्रममभिलषितादवाय राघवायान्यवेदयत् ॥ पद्यं ॥ हृत्वाद्रेः शि

॥ १ दिव्य ॥ १ निराकृतिः २ विभुंदः ३ दैत्य ४ वृक्षाः ५ राक्षससमूहः ६ विश्वामित्रः ७

खगणितानिपरितः क्षित्वाहसित्वाक्रुधाकृत्वाहस्तविघट्टनंततइतः स्थित्वानटित्वामुहुः ॥ सिक्ताक्ष्मासमसृजास्त्रजातकृतयावध्या
कचान्खचगनुदग्ध्वाग्नेः सदृशाद्दृशानिशिचरान्कंधंनिरंध्रंदिवः ॥ ४८ ॥ तत्र ॥ संक्रांतवर्णांतरगाधिसूनोः संपर्कपुण्यादिवराम
भद्रः ॥ क्षात्रक्रमात्त्विष्पलदंडयोग्यः पलाशदंडाहृतपाणिरासीत् ॥ ४९ ॥ मारीचर्नाचमतिराहवमाचरन्त्यक्षितः क्षणनरघुनायक
सायकेन ॥ मध्येपयोनिधिभयेननिमग्नमूर्त्तिर्वेपथुपापजलमानुपनिर्विशेषं ॥ ५० ॥ स्वबाहुगाहवोन्मत्तः कृत्तः काकुत्स्थपत्रिणा ॥ मुनि
नामनभित्रेतः त्रेतनाथानिर्थीकृतः ॥ ५१ ॥ वंशस्पृशाहृदयहारिफलान्वितेनरामेणनरघुनायकसायकेन ॥ स्नेहान्वितेननिरगादसुरागि
णीव प्राणावलीहृदयतः पिशिताशनानां ॥ ५२ ॥ अथनिशिचरघातात्क्रांतवैतानविघ्नोमुनिरवभृथकृत्यं विश्वहृद्यं समाप्य ॥ अम
नुतजयदलक्ष्म्याराममाजौ समेतं यजनजनितमूर्त्यायोक्रुमव्याजलक्ष्म्या ॥ ५३ ॥ गद्यं ॥ अथमिथिलां प्रस्थितो विश्वामित्रः

॥ ॥ टिप्पणं ॥ १ राक्षसः किंशुकश्च २ तैलंसव

काकुत्स्थयोरित्थमकथयत् ॥ पुरा खलु कुशेशयासनजन्मा कुशिकाभिधानो राजर्षि कुशनाभकुशांबअमुरंवैश्चतुर्भिः कोशांबं
महोदयधर्मारण्यगिरिव्रजाख्यानां पुरीणां कर्तृभिः पुत्रैर्बभूव ॥ कुशनाभस्य कन्याशतं घृताच्यामजनयत् ॥ कन्यास्ताः सन्नद्ध
यौवनाः कामयमानः पवमानः प्रत्याख्यानात्प्रत्यापन्नमन्युरासामवयवेषु वैनार्जवमतनुत ॥ अथ विदितवृत्तान्तेन कुशनाभेन तै
नक्षमामेव प्रतिक्रियां मन्वानेन चूलिसूनवे सोमतयायगन्नेब्रह्मदत्ताय प्रदत्तास्ताः प्रकृतिस्थाः बभूवुः ॥ पुनरपि कुशनाभस्य पुत्रीयत
पितृप्रसादादगाधसत्त्वान् गाधिसंज्ञानस्म त्तात पादानुदपादयत् ॥ इत्थं दाशरथिः कौशिकोत्पत्तिकथानिशामनेन निरायामां यामिनी
मनुभूय वंधूकस्तबकबंधुरेण संध्यारागेण प्राचीमुखे शोणीकृते शोणाभिधानं दधानेन देप्रवर्तितप्रत्यूषः कृत्यः कृतनियमे
न मुनिना सह गंगामुपतिष्ठमानेन पथा प्रातिष्ठत ॥ पद्यं ॥ आजानपावनक्षीरां टपानंदविधायिनीं ॥ श्रौतिप्रणयिनां साय

॥ टिप्पणं ॥ ॥ १ वक्रतां २ सरलाः ३ उन्नतेन ४ जन्मपर्यंतं वत्सोच्छिष्टं च ५ धर्मः बलीवर्दश्च ६ वेदः कर्णश्च

स॰ रा॰ ९

योध्यामध्यास्त सावित्रः सगरो नृपः ॥ केशिनीसुमतिभ्यां च लंघितप्रथमाश्रमः ॥ ६४ ॥ सपुत्रीयन्सपत्नीकस्तपस्तेपे हिमाद्रये ॥ भृगु

प्रीतमनास्तस्मै ददौ दोयाद संपदं ॥ ६५ ॥ असमंजस्कतं लेभे वैदर्भी केशिनी तयोः ॥ षष्टिंपुत्रसहस्राणां सुमतिश्च यवीयसी ॥ ६६ ॥

असमंजसचारित्रमसमंजमपास्यसः ॥ आरब्धहयमेधः सन्नमुंचत तुरंगमं ॥ ६७ ॥ क्रव्यादवपुषा सोयमहारि हरिणा हयः ॥ ततस्तत्र

दृष्टुमन्वेष्टुं सौमतेयाः खनास्थिरे ॥ ६८ ॥ सर्वे स पर्वतामुर्वीं खनंतः सगरात्मजाः ॥ चकुर्झझरितध्वांतं नागलोकं नखांशुभिः ॥ ६९ ॥ तत्र ते

तपसादीप्तेन तमस्तोन प्रमाथिनि ॥ कापिले ज्वलनेर्वागलेभिरेद्वाल्भोपमां ॥ ७० ॥ असमंजसुतं पौत्रमंशुमंतमथाब्रवीत् ॥ सौमित्त्वा

समाधत्तां सर्वेन तं तु भवानिति ॥ ७१ ॥ सोपि गत्वा बिलं तत्र दृष्ट्वा भस्मीकृतान् पितॄन् ॥ साश्रुस्तेभ्यो जलं दित्सुश्चिराल्लेभे तुरंगमं ॥

॥ ७२ ॥ मातुलो गरुडस्तेषामेनं तत्रैवमब्रवीत् ॥ गंगामिहानयायुष्मन्नेषां नेयागतिः परा ॥ ७३ ॥ ततस्तनयवृत्तांतं श्रुत्वा

॥ ॥ टिप्पण ॥ ॥ १ पुत्रः २ निरस्त ३ अश्वं ४ यत्नं ५ शत्रुमित्र 3744

बा॰

न्ध्य तुरंगमः ॥ समाप्य सगरः सत्रं पुत्रशोकाद्दिवं गतः ॥ ७४ ॥ अथांशुमान्नयं राज्यं चिरायपरिपालन् ॥ दिलीपेन्यस्तभूभार
स्तपस्तेपे हिमालये ॥ ७५ ॥ दिलीपेपि दिवं याते श्रुत्वा वृत्तं भगीरथः ॥ पितॄन्विधातुं स्वर्गतीन्विदधे मतिमान्मतिं ॥ ७६ ॥ अम
र्त्यसरितं कर्तुं मेने मर्त्यतरंगिणीं ॥ ततो गोकर्णमासाद्य तपस्यति भगीरथे ॥ ७७ ॥ देवो देवापगां वोढुमन्वमंस्त दयानिधिः ॥ अथ
वीचिनिचयच्छन्नदिगंतगगनांतरा ॥ ७८ ॥ शशांकशंखसंभिन्नतारामौक्तिकदंतुरा ॥ तरंगाकृष्टमार्तंडतुरंगायासिताकुणा ॥ ७९ ॥
फेनच्छन्नस्वमातंगमार्गणव्यग्रवासवा ॥ आविः शाखिशिखोन्नेयनंदनद्रुमकर्षणा ॥ ८० ॥ एकोदकनभोमार्गदिङ्मूढ दिव
संभ्रमा ॥ आवर्तगर्तसंभ्रांतविमानप्लवविप्लवा ॥ ८१ ॥ नीलजीमूतशैवालकृतलेखाहारिनटा ॥ अवलेपभराक्रांतात्रैलोक्य
तरंगिणी ॥ ८२ ॥ पपात पार्वतीकांतजटामंडलगह्वरे ॥ अलब्धनिर्गमा शंभोः कपर्दाद मरापगा ॥ ८३ ॥ दधौ दूर्वाशिखा
॥ ॥ टिप्पणं ॥ ॥ १ जलभ्रमः २ गर्वः ३ जटाजूटः

गनतुषारकणिकोपमां ॥ अदृष्ट्वा तांनदींतत्र तुष्टाव परमेश्वरं ॥ ८४॥ भगीरथो विधेः क्रौर्यात्परिक्षीणमनोरथः ॥ गंगासमाकृति
जांतान्यपनहर मूर्द्धतः ॥८५॥ तेनमुक्तस्याप्रसन्नेनक्षिप्ताबिंदुसरस्यपि ॥ तासुप्राचींगतास्तिस्रस्तिस्रः प्रोचीं तसीं दिशं ॥ ८६ ॥
अन्यापितृक्रियोद्युक्तभगीरथरथानुगा ॥ सैषा भागीरथी जन्होः सत्रक्षेत्रसमावरणात् ॥ ८७॥ तांसपीत्वा ततः श्रांतोजन्होः श्रो
त्रेणवर्त्मना ॥ तया तारिन्या जान्हव्या प्रापत्रिदिवं पितॄन् ॥ ८८॥ भगीरथः पुरंप्राप्य परिपूर्णमनोरथः ॥ गद्यं ॥ अथ दाशरथिरा
कर्णितभागीरथीकथस्तांसरितं विलंघ्य विशालां पुरीं विलोकयन्कस्येयमिति गाधिनंदनमपृच्छत् ॥ सोप्येवमवोचत् ॥ पुरा
खलु सुरासुरगणानां सुधानिमित्तं मिथो विरोधे प्रवृत्ते मायां विश्वमोहिनीं विश्वरूपः प्रदर्श्य दैतेयनिधनं शतधारपाणिना कारयामा
स ॥ तेषांतु जननी दितिरतिवेलमभ्युपगतमन्युः शांतमन्युशासनं कमपि पुत्रं लब्धुकामा पत्युर्मरीचेर्वचनात्कुशप्लवने स्म चि

॥ ॥ टिप्पणं ॥ ॥ १ वारुणी २ विष्णुः ३ इंद्रः

रं तपश्चचार ॥ तां कैतवेन शुश्रूषमाणः शक्रः शतधारपाणिः पादकलितकेशकलापामापन्ननिद्रामपवित्रेतिनिर्वर्ण्याव गाहित
तदीयजठरः स तथा गर्भं निर्भिद्य निर्जगाम ॥ दितिरपि विदिततनयकदनानान्यपि खंडान्याखंडलेन सप्त सप्त कृतः कारयित्वा त्रि
विष्टपं प्रविष्टा ॥ ततः ॥ प० ॥ अलंबुसायामिक्ष्वाकोर्जातः कश्चिन्महीपतिः ॥ विशालः स्वेन नाम्नात्र विशालां विदधे पुरीं ॥ ०० ॥ तदनु ॥
गधं ॥ तद्वास्तव्येन सुमतिनाम्ना नृपतिना कृतातिथ्यः सराजपुत्रो विश्वामित्रस्तत्र निशीथिनीं नीत्वा मिथिलां प्रतिप्रस्थितः प्रतपस
मुनमस्य गौतमस्याश्रमं प्रदर्श्य तद्वारं नुयुक्तां कथामित्थमकथयत् ॥ प० ॥ अत्रागमद्गौतमधर्मदारान्नार्यजुष्टेन पथा महेंद्रः ॥
कुद्धस्ततां निर्दूषणं दूषणं नार्यामेंदृश्यां च मुनिश्चकार ॥ ०१ ॥ वनमेतदृतेरामेशापान्मुक्ता भविष्यसि ॥ इत्युक्त्वा गौतमः पत्नीं हिमा
द्रिं तपसे ययौ ॥ ०२ ॥ ततो विदितवृत्तांतेर्देवतानां गणैस्तदा ॥ पितृणां प्रापितो बालैर्मेषैः पत्यस्य दूषणं हृपा ॥ ०३ ॥ तदनामेन सो मुक्तो प्रानिर

॥ ॥ टिप्पणं ॥ ॥ १ संबद्धा २ निरं ३ इंद्रं ४ शिलां ५ अधेः

ण्हातुर्गौतमः ॥ इतितस्याश्रमंभेजे साकंरामेण कौशिकः ॥ १४ ॥ ततः ॥ दुःखेसुखेचरज एवबभूवहेतुस्तादृग्विधेमहतिगौतम
धर्मपत्न्याः ॥ यस्माद्गुणेनरजसाविकृतिंगतासारामस्यपादरजसाप्र[1]कृतिंप्रपेदे ॥ १५ ॥ ग० ॥ तस्मिन्नहल्ययाकृतमातिथ्यंविश्वामि
त्रःसराजपुत्रःप्रतिगृह्यमिथिलोप[2]कंठभुविजातंजनकयजनभवनमभजत ॥ तदनुजनकेनविधिवदभ्यर्थितेतस्मिन्कुशिकस्
तेनिमिकुलपुरोधाःशतानंदोरघुनंदनमेवमभाषत ॥ प० ॥ तिष्ठन्नृक्ष[3]त्राहेदृत्तौमुनिरगमदसावाश्रमंब्रह्मसूनोरातिथ्यंतत्रलब्ध्वानि
रवधिस्फुरभिप्राभवादित्यवेत्य ॥ सोनेनप्रार्थितोभूत्तदनुमुनिवरेनाभ्युपेतेचकर्षन्नूक्रोशंतींतांतथैवप्रचुरबलजुषाकांदिशीकोबभूव
॥ १६ ॥ ग० ॥ बहुशास्तद्बलचकितस्यतपोबलाधिगतविविधायुधानिर्गमस्यसुरभिनिमित्तंभूयोपिसमारब्धसमरस्यास्यदिव्यास्त्रपरंप
रांब्रह्मदंडेननिरुंधन्नैरुंधतीजानिरवतस्थे ॥ ततोयंजातव्यलीकःक्षात्रंतेजःपरंब्राह्ममेवमहोमहीयइतिनिश्चित्यतास्सिद्ध्येदक्षिण

॥ ॥ टिप्पणं ॥ ॥ १ पूर्वरूपं २ अंतिकः ३ मृगयाव्यापारः ४ वेदस्य ५ वसिष्ठः ६ दुःखं

स्यां दिशि तीव्रतरं तपश्चचार ॥ अथ सावित्रः क्षत्रियस्त्रिशंकुः सशरीरः स्वर्गसिद्धिं प्रार्थयमानो वसिष्ठेन प्रत्याख्यातस्तस्य पुत्रैर्महो
दयादिभिर्निर्बंधकुपितैर्दत्तचंडालभावस्तमेनं शरणमभजत ॥ असावपि तन्मनोरथपूर्तये क्रतुमेकं कर्तुं प्राक्रमत ॥ तत्र समागते
षु ब्राह्मणेषु जिगुप्सया त्रिशंकुयजनेनागतान्वसिष्ठपुत्रानयं शापेन श्वभक्षकानकरोत् ॥ तत्र क्रतुभुजां वर्गेपि स्वर्गादनवतीर्णे ॥
पद्यं ॥ अयं महात्मा तपसः प्रभावादारोपयामास दिवं त्रिशंकुं ॥ नीलांबरं निर्हुतराजवेषं वर्षानिशीथादविशेषवेषं ॥१७॥ त
तः ॥ अपातयत्स्वर्गमुपाश्रयंतं संजातमन्युः शतमन्युरेनं ॥ ततो बलं व्यास्य नियोगशंकुं लेभे त्रिशंकुर्गगने प्रतिष्ठां ॥१८॥ ग
द्यं ॥ ततः सर्वगीर्वाणगणप्रार्थनया परित्यक्तभुवनांतरनिर्माणकर्माणं तत्र तपः प्रत्यूहमन्यद्भूत इति पश्चिमायां दिशि पुष्करेषु
फलं तपश्चरंतममुमंबरीषयज्ञपशुविनाशप्रायश्चित्तार्थबलीभर्गो निःक्रीतो नरपशुतां नीयमानस्तावदृचीकस्य मध्यमपुत्रः शुनः

॥ ॥ टिप्पणं ॥ ॥ १ कुत्सया २ त्यक्तः

शेपः शरणमयाचत ॥ अयंभगवान्निजजननयविनिमयेनरक्षितुमनमुन्मुखः पराङ्मुखेभ्यस्तेभ्यो हविष्यंदादिभ्यः शा
पेनवसिष्ठपुत्रदशांदत्वा गाथाद्वयप्रीताभ्यामिंद्रोपेंद्राभ्यामंवरीषंशुनः शेपंचपरिपूर्णमनोरथौकारयामास ॥ ततः तप
स्यंतमेनंमेनकासंगतस्तपोभंगश्चिरमंगीचकार ॥ ततः पश्चात्तापाभिभूतोयमुत्तरे भूभृतिकौशिकीतीरेघोरंतपश्चचार ॥
तत्रजंभारिप्रहितांरंभांशैलीभवेतिशप्त्वापूर्वस्यांदिशिनिरस्तनिश्वासंतपश्चरन्त्यमुष्मिन्नूष्मणातपोग्नेरुद्विग्नमानसस्तोमर
सासनः सन्निधायजितेंद्रियत्वात्ब्रह्मर्षिरसिवसिष्ठोप्येवंव्याहरतुभवंतमित्यभाषत ॥ प० ॥ असौवसिष्ठनिर्देशाद्ब्रह्मर्षित्वमविं
दत ॥ यथोपनयसंस्काराद्द्विजन्माब्रह्मवर्चसं ॥ ९९ ॥ इतिजनकपुंगेधः श्लाघितोगाधिसूनुः सहनृपतनयाभ्यांशर्वरींतत्रनीत्वा ॥
विधिवददिशदर्घ्यपुष्पदर्भापगर्भसरसिजदयितायज्योतिषेछांदसाय ॥ १०० ॥ गद्यं ॥ तदनुजनकराजधानींरामलक्ष्मण

॥ ॥ टिप्पणं ॥ ॥ १ ब्रह्मदेवः २ व्रतबंधः ३ पुरोहितः ४ सूर्याय

निरीक्षणकौतुकादनवरतपातितेनविकचकुवलयनिचयोपचीयमानमेचकमरीचिवीचिमालिम्लुचेनपौरनारीजनविलोचनरोचि
षाकवचितनरपतिपथां विश्वामित्रः प्रविश्य दशरथतनयावित्थमभाषत ॥ अस्यांखलु नगर्यामारभ्यतत्तस्य राज्ञोजनकस्यभागधे
यात्सीतानामधेयभाजनमजीजनत्कन्यारत्नं रैलगर्भभगवती ॥ तस्याः पुनः किंपरं किमपिमाहात्म्यं ॥ यतः ॥ पद्यं ॥ यस्याः पृथ्व्यावस
नमुदधिः पीटिका हाटकाद्रिर्हारः सिंधुः संगरतनयस्वर्गमार्गैकबंधुः ॥ क्रीडाशैलः परमपुरुषक्रौडदंष्ट्राचतस्याः सीतामातुर्जगति
मिथिलांसूतिकागेहमाहुः ॥ १०१ ॥ अत्रसीताविवाहार्थममरैरपिदुष्करं ॥ जनकः कल्पयामासधनुरारोपणंपणं ॥ १०२ ॥ ततोमह
र्षिजनकस्यराज्ञः सभांस्कधर्मा सदर्शांप्रपेदे ॥ तौ चापतुश्चापविलोकलोलौ सचापलौकौसलराजपुत्रौ ॥ १०३ ॥ तत्रविधिवद
भ्यर्चितः कथितदशरथतनयवृत्तांतः कौशिकप्रमुखैरमरैरस्मत्कुलेमहत्तरे देवराते निक्षिप्तंविशेषतः सीताशुल्कार्थमयारक्षि

॥ ॥ टिप्पणं ॥ ॥ १ नीलाः २ पृथ्वी ३ हेमाद्रिः ४ गंगा ५ वराहः ६ अरिष्टं ७ सतृष्णौ

तामिदमितिजनकेन प्रदर्शितस्य चापस्यारोपणेगममादिदेश ॥ पद्यं ॥ रामेबाहुबलंविदृण्वतिधनुर्वंशेगुणारोपणं नाभूत्केवल
मात्मनातिलकितेवंशोपिवैकर्तने ॥ आकृष्टंनितरांतदेवनपरंसीतामनोपिद्रुतंभंगस्तस्यनकेवलंक्षितिभुजांदोस्तंभदंभस्यच
॥१०४॥ रामाकर्षणभग्नकार्मुकभुवाध्वानेनरौद्रोरुधाद्दृप्तक्षत्रयशःसितच्छदकुलेजीमूतनादायितं ॥ वीरश्रीप्रथमप्रवेशसमये
पुण्याहघोषायितंमैथिल्याः किलमानसेपरिणयेमांगल्यतूर्यायितं ॥१०५॥ रवः कठिणकर्षणत्रुटितचापजन्माक्षणाद्दिशां
द्विरदफीत्कृतैः कृतहरिस्पातिस्वागतः ॥ जगद्भ्रमणकौतुकोच्चलितरामकीर्त्यंगनाप्रयाणपटहध्वनिंप्रथयतिस्मताराध्वनिः॥१०६॥
गद्यं ॥ तत्रसीतापरिणयकृतनियमजनकप्रहितदूताहूतःपुरोहिताभ्यकपगमान्मिथिलामुपागमद्दशरथः ॥ पद्यं ॥ यत्कीर्तिस्ति
ल्कायतेस्फुरवधूसंगीतगोष्ठीमुखेयेनाद्यः पितृमान्पुमान्वसुमतीयेनैवराजन्वती ॥ इंद्रःसंगरसंकटेषुविजहौवीरस्ययस्यो

॥ ॥टिप्पणं॥ ॥ १ पावा दधिवा २ राजहंसः ३ मेघः ४ तज्जातिशब्दैः

न्मुरवप्रेंखत्स्यंदनकेतनोबरदशासंदर्शनाद्दुर्दशां ॥१०७॥ ततः ॥जनकः स्वकेनीयांसमाजुहाव कुशध्वजं ॥ हत्वा युधि सुधन्वा
नंसांकाश्येस्थापितंपुरे ॥१०८॥ तदनुताभ्याम भ्यार्चितः सपुरोहितो दशरथस्तत्र पुत्राणां गोदानमंगलंनिर्वर्तयामास ॥ पद्यं ॥ज
ग्राहजनकात्सीतांतातादेशेन राघवः ॥ आम्नायशासनेनार्चयिजमानादिवानलः ॥१०९॥ गद्यं ॥ आश्चर्यमेतत् ॥ पद्यं ॥ गुण
मनिमिषचापेकंविदारोप्यसीतांकुशिकतनयवाक्यादग्रहीद्रामभद्रः ॥ तदनुतदनुजन्मामैथिलेंद्रस्य वित्ते निहितबहुगुणः
सन्नूर्मिलांलक्ष्मणोपि ॥११०॥ ततो भरतशत्रुघ्नौ कुशध्वजनियोगतः ॥ मांडवी श्रुतकीर्तिभ्यामभूतां ग्रहमेधिनौ॥१११॥ग
अथदशरथः स्वतनयैः सहकृतविवाहैर्विदेहेभ्यः प्रतिनिवर्तमानो दुर्निमित्त दूयमानां न रंगः संवर्तसमयसमुज्जृंभितहुतवह
दुःसहरोषभीषणंदुर्वारं पराक्रमंक्षत्रवर्गगर्वसर्वंकषपरश्वधधाराधीनरुधिरधारापारकल्पितपितृतर्पणंदर्पवतामग्रेसरंसमु

॥ ॥ टिप्पणं ॥ ॥ १ कनिष्ठं २ केशांतकर्म ३ वेदः

दग्रप्रतापंतपः समुचितवल्कलमयवसनंवसानमपिवासनावशादनतिपरिमुषितयुद्धश्रद्धं मध्येमार्गभार्गवंमुनिमान्विष्ट
रामभद्रमद्राक्षीदग्रार्क्षाच्च ॥ तन्निरीक्षणादेवप्रक्षीणहर्षोपिमहर्षिभिः सहविधायसपर्यामार्यशीलः कुशलमन्वयुंक्त ॥ पद्यं ॥ अथद
शरथवाणींतामशृण्वन्प्रसन्नांभृगुपतिरिदमूचेप्रस्थितंरामभद्रं ॥ अवजिगमिषुरासंजीर्णचापात्तकीर्त्तेरविदितपरशोस्तेदोर्मदं
कार्मुकेस्मिन् ॥ ११२ ॥ आदायतत्सगुणमाशुविधायतत्रसंधायबाणमवधार्यतपोधनत्वं ॥ तज्जीवितायदयमानमनामनीषीसं
भूतघोरसमराद्विररामरामः ॥ ११३ ॥ तावुभौचभृगुवंशसंभवौचापदंडजमदग्निसंभवौ ॥ प्रह्व[1]भावमवलंब्यकेवलंराघवार्पितगुणौ
बभूवतुः ॥ ११४ ॥ युगपत्प्राप्तगुणयो[2]श्चापभार्गवयोस्तयोः ॥ ऋजुतावक्रतांप्रापवक्रतापितथार्जवं ॥ ११५ ॥ गद्यं ॥ ततस्तत्क्षण
ममोघेनराघवः शरेणभार्गवस्यस्वर्गगतिंरुरोध ॥ स्थानेहितत् ॥ पद्यं ॥ नूनंजनेमपुरुषेमहतिप्रयुक्तमागः[3] परंतदनुरूपफलं
॥

॥ टिप्पणं ॥

॥ १ नम्रत्वं २ विनयः मौर्वीच ३ अपराधः

प्रसूते ॥ कृत्वा रघूद्वहगतेः क्षणमंतरायं यद्भार्गवः परगतं विहतिं प्रपेदे ॥ ११६ ॥ गद्यं ॥ अथ संक्रांतपाजामदग्न्यशक्तिसंपदा संपन्नपन्नगप
रिवृढभोगभुजाभिराममविरलपुलकमालिंग्य मूर्ध्न्युपाघ्राय दशरथः परिखवयेव परिसरंत्या सरयूसरितानुविद्धामयोध्यां दारकान् सदा
रानुसादरमवलोकयंतीनां पौरपुरंध्रीणां नीरंध्रितगवाक्षैः कटाक्षैः सौंदर्यवंचिततापिच्छैः पिच्छातपत्रायमाणधवलातपत्रः प्रविवेश ॥
पद्यं ॥ तत्र ॥ लज्जावशादविशदस्मरविक्रियाभिस्ताभिर्वधूभिरतिवेलमवाप्तसौख्यान् ॥ इक्ष्वाकुनाथतनयान्प्रथमोरसानां तारु
ण्ययोगचतुरश्चतुरः सिषेवे ॥ ११७ ॥ विद्ययेव त्रयीदृष्ट्या दर्भपत्राग्रधीः सुधीः ॥ राजपुत्र्या तया रामः प्रपेदे प्रीतिमुत्तमां ॥ ११८ ॥
॥ ॥ इति श्रीविदर्भराजविरचिते चंपूरामायणे बालकांडः समाप्तः ॥ ॥ अथ द्वितीयकांडप्रारंभः ॥ ॥ ॥
प० ॥ गच्छता दशरथेन निर्दिते भूभुजामसुलभां भुजाबलात् ॥ मातुलस्य नगरे युधाजितः स्थापितौ भरतलक्ष्मणानुजौ ॥ १ ॥ अथ द
॥ ॥ टिप्पणं ॥ ॥ १ विघातं २ श्रेष्ठः ३ चतुःसंख्याकान् ४ सुखं ५ दुर्लभां

शरथः पुत्रंरामंस्वतस्त्रिजगत्पतिंस्वविषयमहीमात्रेकर्तुंपतिंविदधेमतिं ॥ भुवनभरेणकल्पंकल्याणभूधरमादरात्स्वगृहपटलीधु
र्यस्तंभंविधातुमनाइव ॥ २ ॥ ग॰ ॥ तदनंतरमसौसंमंत्र्यमंत्रिभिःसहपौरवृद्धान्वृद्धश्रवःपुरोधसःसमात्पुरोहितान्समाहूयसभा
द्दिदेश ॥ विदितमेवहिभवतांशिवतातिमेवमतिंदधानाःसुपथास्कसंचरमाणाःप्राणिनांदयमानमानसाःमानधनाःअस्मद्वाःसंस
राणिसंमार्जनजागरूकाःजनोपतापमार्जनपराःपरांनिर्वृतिमुपेत्यदेवभूयंगताःसर्वेनःपूर्वपुरुषाइति ॥ तस्मादस्माभिरप्येते
षांसरणिमनुसरमाणैरेतावंतंकालंपरिपालिताःकिलसकलाःप्रजाःप्रमाणमत्रपरिपालनाक्रियामनुभवंतोननुभवंतः ॥ एवंभव
तामभ्युपगतानांनिगमानांवाप्रतीपगामिनींपदवींनप्रत्येतिखलुलोकस्तदस्तिकिंचिदभ्यर्थनीयं ॥ प॰ ॥ ममस्फारनरागीतख्या
तिभिर्हेतिभिर्वादिविभुविचसमानप्रक्रमैर्विक्रमैर्वा ॥ नियतमपरिहार्यायाजरासामदंगेविकचकमलखंडेचंद्रिकेवाविरासीत् ॥ ३ ॥
॥ ॥ टिप्पणं ॥ ॥ १ धारणे २ समर्थ ३ कल्याणकरीं ४ मार्गं ५ देवत्वं ६ पूर्वपुरुषाणां ७ विश्वासिति ८ शस्त्रैः ९ आरंभः

गद्य०॥ तस्मात्समस्तक्षत्रवर्गगर्वपाटनपटुधारापरश्वधभरणभीषणवेषभार्गवभंगादपरिच्छिन्नतरशौर्यशालिनिसौजन्य
भाजनेजनानुरागनिलयेनिर्मत्सरे मत्समेवत्सेऽस्मिन्विश्वंभराभारं चिरकालधार्यमाणमार्यैरमात्यैरनुमतः सन्नवतार्यविश्रांति
सुखमनुभवितुमभिलषामीति ।। ततः प्रावृषेण्यपयोवाहव्यूहस्तनितनादाकर्णनसमुदीर्णनिरतिशयाल्हादनिसर्गनिरर्गलनि
र्गलत्केकालापिनःकलापिनइवजनाःप्रमंदभवकलकलरवमुखरितहरिन्मुखाबभूवुः ।। पद्यं ॥ आनंदबाष्पविसरोनयनेप्रजा
नामाविर्बभूवमकरंदइवारविंदे ॥ रामस्यकांतिमभिषेकदिनेभविस्रीं प्रक्षाल्यवक्षरिववीक्षितुमादरेण ॥ ४ ।। गद्यं ॥ राजा
पितेषांसंपत्स्यमानमहोत्सवोत्सुकजनसंमर्दजनिष्यमाणरजोराजिव्रातपरिजिहीर्षयेवरोमांचप्रपंचेनकंचुकितांगानांप्र
माणातीतांप्रीतिंप्रपन्नानांहर्षप्रकर्षेणद्विगुणीकृतमानंदमंतर्नियम्यस्वमंत्रप्रमुखान्मंत्रिमुख्यानेवमाचख्यौ ।। पद्यं ॥
॥ ॥ टिप्पणं ॥ ॥ १नाशनं २ कुठारः ३ अपरिमितं ४ भरणं ५ अपरिमितः ६ निष्प्रतिबंधं ७ हर्षः

अस्माननाश्रिततपोवनभूमिभागानुन्मुच्यमार्गपरिपालनजागरूकान्॥ अम्लानमौग्ध्यमचिरादवलंब्यराममेवंविधःक
थमुदेतिजनानुरागः॥५॥ ग॰॥ तेपिनियमितान्निजमनोरथायदशरथायसविनयमेवंव्याजिज्ञपन्॥ प॰॥ देवेस्थितेपितनयं
तवधामभद्रंलोकः स्वयंभजतुनामकिमत्रचित्रं॥ चंद्रंविनातदुपलंभनहेतुभूतंक्षीरोदमाश्रयतिकिंतृषितश्चकोरः॥ ६॥
गद्यं॥ तदनंतरंतत्वरेतत्वविदांवरस्यवसिष्ठस्यशासनादभिषेकोपकरणाहरणायसामात्यःपौरवर्गः॥प॰॥ आहूयरामंविनया
भिराममाविःप्रमोदप्रभुरेवमूचे॥ तवोत्तमांगेमुकुटंविधातुमन्हायतिष्येदिवसेयातिष्ये॥७॥ ग॰॥ अथदशरथमनोरथंकौस
ल्यायैनिवेद्यस्वभवनमुपगतस्यरामस्यभगवान्वसिष्ठःसंजातकौतुकःकौतुकमंगलंनिर्वर्तयामास॥ प॰॥ आपूरयन्मंगलतूर्य
घोषैराशावशावल्लभकर्णतालान्॥ उज्जृंभितःकोपिगिरामभूमिरुन्मस्तकःपौरजनातिमोदः॥८॥ तत्र॥ यामेवाहुर्निशिवरकुले

॥ ॥टिप्पणं॥ ॥१ मस्तके २ पुष्ये ३ दिग्गजाः

न्मूलने मूलहेतुं यस्याश्चित्तं प्रकृतिकुटिलं गात्रमित्रं बभूव ॥ अंभोजिन्याः शिशिरमरितः कासरी वाच्छ मंभः कैकेय्याः साहृदयमदयं मंथरानिर्ममंथ ॥ ९ ॥ अलघुचलितझंझावातनिष्पेषदोषाद्दशानिरविकठोरः शीनलांभोदपंक्तौ ॥ अपहृतजनसौख्यान्मंथराभेदवाक्यादपि भरतजनन्यां हंतदौर्जन्यमासीत् ॥ १० ॥ गद्यं ॥ सैषा मंथराभिधानपिशाचिकावेशपरवशा निजाशयापूर्वं दंडकेवेजयंतपुरवास्तव्य शंबरासुरसंगरसंगतवेदनापनोदनवेतनार्थमात्मने वितीर्णवरायदशरथाय वरद्वयं न्यवेदयत् ॥ पद्यं ॥ तयोरेकस्य संरंभो भरतस्याभिषेचनं ॥ अन्यस्य वन्यहृत्यैव वने रामस्य वर्तनं ॥ ११ ॥ तस्मिन् क्षणे वरयुगं क्षणतस्ततामनाराचवेधपरुषं श्रवसी विदार्य ॥ सत्यप्रहाणचकितस्य नृपस्य काममूरीचकार हृदये पुटपाकरीतिं ॥ १२ ॥ तदनुतनयवार्तामात्रसंतप्यमानाद्दथ दशरथ चित्ताचेतना निर्जगाम ॥ दवहुतवहरोचिर्ज्वालयालिह्यमानाज्झटिति गहनगुल्माद्दुज्जिहाना मृगीव ॥ १३ ॥ ग० ॥ अथ दशरथः कथमपि लब्धसंज्ञः

॥ ॥ टिप्पणं ॥ ॥ १ महिषी २ सशब्दिकवायुः ३ बाणः ४ कर्णौ ५ अंगीचकार

कैकेयीमभाषत ॥ पद्यं ॥ रामः काममुपाश्रयिष्यति वनं त्यक्त्वा धृतं कौतुकं लोकस्त्यक्ष्यति कौतुकं चिरधृतं तस्याभिषेके कथं ॥ धर्मापा
यभयेन वत्स विरहं द्रक्ष्यामि वक्ष्यामि किं यावत्कल्पमकीर्तिरार्तिजननी जायेत जायेत तव ॥ १४ ॥ वत्सं कठोरहृदये नयनाभिरामं रा
मं विना न खलु तिष्ठति जीवितं मे ॥ धातुर्बलादुपयमस्त्वयि जातपूर्वः कैकेयि मामुपयमं नयतीति मन्ये ॥ १५ ॥ गद्यं ॥ तदनु निजमनो
रथैकपूरणे कृतादरा कैकेयी सोपहासमवादीत् ॥ पद्यं ॥ सत्यविप्लवमपत्यसंगतः संगतं भृशमपश्यतस्तव ॥ आश्रुतस्य विफलत्वम
स्ति चेदाश्रुतस्य रचितोयमंजलिः ॥ १६ ॥ किं नागतस्ते श्रवसोः सकाशमरिंदमः सत्यगिरां पुरोगः ॥ श्येनामिषीभूतकपोतपोतजीवा
तवे शस्त्रनिकृत्तगात्रः ॥ १७ ॥ किंच ॥ अभ्यर्च्य कस्मैविदुपाश्रिताय वितीर्य विप्राय विलोचने स्वे ॥ आपूरयत्कश्चिदलर्कसंज्ञः प्राज्ञः प्रति
ज्ञां प्रथितः प्रभावः ॥ १८ ॥ असुरसमरवेलाजातबाधावसाने वरयुगमदिशास्त्वं प्रीतिपूर्वं यथा मे ॥ अशिथिलगुणबंधाः सत्यसंधा नरेंद्रा

॥ ॥ टिप्पणं ॥ ॥ १ विवाहः २ यमसमीपं ३ कर्णयोः ४ जीवनार्थं

जललिपिरितिकामंसंगिरंतांगिरंतां ॥१९॥ किंबहुना ॥ सद्योधांगिरमिह निर्वहस्वमावामन्मानंभुविनसहेयराममातुः ॥ संस्थास्येवि
षमुपभुज्यपश्यतस्तेसन्नाहंत्यजसिनचेत्प्रवर्तमानं ॥२०॥ गद्यं ॥ एवंवादिनीमेनांभूयोपिभूपतिरवदत् ॥ अयिकठिनहृदयेकिमुक्तंमु
क्तलोकमर्यादयादयापेतयात्वयेति ॥ पद्यं ॥ नैवाभवस्त्वमिहशीलवतीषुगण्यानैवागमत्पितृमतांगणनांसरामः ॥ नैवापमात्मजस्व
रवान्यहमप्यनार्येनैवापमंबुभरतेननमेभरेयं ॥२१॥ किंच ॥ वासस्त्ववांभवतु किंचनतारवीणांछायाद्रुमाश्वभवनानिभवंतुवन्याः ॥ कै
केयितस्यशयनानिकथंभवेयुस्त्वच्चेनसोपिकठिनानिशिलातलानि ॥२२॥ एवंभर्त्रा भर्त्सिनाप्याद्रवित्तानाभूदेषामंथराक्रांतहृतिः ॥
राकाचंद्रराजमाननिशायांवीरुच्छन्नाचंद्रकांतस्थलीव ॥२३॥ ग० ॥ तदनुमुहूर्तमात्रमपिराममुखावलोकनसुखमनुबुभूषुर्दशरथःकु
मारमानयेतिसुमंत्रमादिदेश ॥ तेनसत्वरंराजभवनंप्रवेशितस्ततोरामःकृतप्रणामःपितरमयथाभूतमुखविकासमागदालक्ष्यचकितमतिः

॥ ॥टिप्पणं॥ ॥ १ तरुसंबंधिनीनां २ पूर्णिमा ३ लता ४

किमिदमिति केकयीमन्वयुंक्त ॥ सापि पापाशया प्रत्यवादीत् ॥ वत्सप्रतिश्रुतवरद्वयनिर्वहणे निपुणतरस्तातस्तत्संप्रतिमानुशायस्तनय
वात्सल्यात्सत्यव्यत्यासत्रासाच्च गाढमगाधशोकसागरं निमज्जतीति ॥ वरद्वयंतावन्नववन्यवृत्त्यैव वनेवर्तनमवनेरवनंभरतस्य चेति ॥ ग
मस्तदाकर्ण्यप्रमुदितहृदयः कृतांजलिरेनामव्यजिज्ञपत् ॥ प॰ ॥ भीतोभूद्भरतः किमेव भरतः किंवा वनात्पावनाद्धन्योऽहं सगरान्ववायककुदंस्तातः कु
तः शोचति ॥ दिव्यायाः सरितो निवापकरणाल्लघ्वीं प्रतिज्ञामिमामावाभ्यामिह पूरयिष्यति नचेत्पुत्री कथं स्यादयं ॥ २४ ॥ वनभुवि तनुमात्रत्राणमा
ज्ञापितं मे सकलभुवनभारः स्थापितो वत्समूर्ध्नि ॥ तदिह सुकरतायामावयोस्तर्कितायां मयि पतति गरीयानं बतेपक्षपातः ॥ २५ ॥ किंच ॥ तातः
स्ववाचाव्यवहृत्यहृद्यं वत्साभिषेकोत्सवमंगलं मे ॥ प्रणामसंज्ञस्य मयार्पितस्य किंपूर्णपात्रस्य न पात्रमासीत् ॥ २६ ॥ ग॰ ॥ तत्क्षणमशनिनिहत इव प
र्वतः सर्वतः परीतदवदहन इव वनस्पतिर्दिवस्पतिपदभ्रंशविधुर इव नहुषः पपात निःसंज्ञः पंक्तिरथः ॥ ततः सापितृनिदेशाविचारमचिरमाचंगति

॥ ॥ टिप्पणं ॥ ॥ १ असमर्थः २ पश्चात्तापसहितः ३ पृथ्वीसंरक्षणं ४ श्रेष्ठः ५ पितृदानं ६ वज्रं ७ दशरथः

राममादिदेश ॥ सएषः ॥ पद्यं ॥ मातुराज्ञांवहन्मूर्ध्नामालामिवमहायशाः ॥ वनायरामोवव्राजजगतामवनायच ॥ २७ ॥ ग० ॥ असौ
समासाद्यकौसल्यासदनमाभिषेकप्रतिबंधकैकेयीनिबंधमात्मनश्चवनवासंप्रणामानंतरंतस्यैन्यवेदयत् ॥ एतदाकर्ण्यविदीर्णहृ
दयाविषदिग्धमुखाशिलीमुखविद्धश्रवणयुगलेवसहसाभूम्यांनिपत्यविललाप ॥ पद्यं ॥ रेखारथांगसरसीरुहशंखचिन्हेक्षेमंकरेतवकरेजग
तांत्रयाणां ॥ कांतारकंदरखननंरचयेतिनूनमाबद्धवान्भ्रतिसरंभगवान्वसिष्ठः ॥ २८ ॥ गद्यं ॥ तत्रसौमित्रिरतिमात्रप्ररूढमन्युःशांतमन्युस
मानमेनमग्रजमकथयत् ॥ आर्यनकार्यमिदंलोकगर्हणीयायाःकैकेय्यावचसाजरसाचसमाक्रांतस्वांततयाकृत्याकृत्यविवेकमूकस्यरा
ज्ञःप्रज्ञाशैथिल्यान्निःसृतेनवचसासंत्यज्यराज्यमटवीपर्यटनं ॥ किंतु तुभ्यमनभ्यर्थयमानायप्रथममेवपित्राप्रदत्तानतुपृथ्वी ॥
क्षत्रधर्मोपिसत्यात्पथःप्रमाद्योपिवर्णाश्रमरक्षणतःसमीचीनःप्रायेणपुरुषानिःश्रेयसेनियोजयेत् ॥ नियतंनियतेर्बलमतिलं

॥ ॥ टिप्पणं ॥ ॥ १ लिसं २ मंगलसूत्रं ३ इंद्रः ४ दैवस्य

घ्यर्थेरुपमेवपुरुषस्यधीरस्यपुरुषार्थान्समर्पयेत् ॥ पद्य ॥ माभूत्त्वत्पदपद्मयोररुणिमाकांतारसंचारतः पाणौपाटलिमामनाकृप्रसरतुज्या
कर्षणादेवमे ॥ कैकेयीपरिभूततातवचनेनम्नोभवान्मास्मभूत् किंवामामकमार्यशौर्यजलधेनम्रंधनुर्वर्ततां ॥ २९ ॥ ग॰ ॥ एवमाचक्षाणं
लक्ष्मणंरामः सांत्वयन्नेवावोचत् ॥ वत्ससवितृवंशजातानांपितृनिदेश एवदेशिकः सर्वकर्मसु ॥ बहवः खलुपितृवचनगौरवात् गो
हत्यामपिमातृवधमपितारुण्यविनिमयमपिमृकंडुरैणुकेयपूरुप्रभृतयः कुर्वाणास्तेपिनिर्विचारमाचारवतामग्रगण्याइतिगण्यं
ते ॥ तस्मादवश्यंवश्यएवापितुरवगाहेगहनमिति ॥ तत्रविस्तृतपुत्रवात्सल्याकौसल्यातेनसहगंतुमभिलषंतीकृतप्रणामेनरामेणस
विनयमेवमभिहिता ॥ प॰ ॥ कांतारभाजिमयिकेकयराजपुत्र्याः कार्कश्यकंदलितयादलितस्यवाचा ॥ तातस्यशोकदहनग्लपितंश
रीरंमातस्त्वयानतुकदाचिदुपेक्षणीयं ॥ ३० ॥ ग॰ ॥ ततःसातनयस्यस्वेस्त्ययनायसमस्तदेवताकीर्तनपुरःसरीमाशिषमाचचक्षे ॥ रामस्ता १९

॥ ॥ टिप्पणं ॥ ॥ १ दुर्गममार्गः २ कल्याणाय

मभिवंद्यनिष्क्रांतः प्रक्रांतनेपथ्यायाः सीतायाः प्रासादमाससाद ॥ प० ॥ कल्याणवादस्फारितांसहसैवकांतांकांतारचारकथयाकलुषी
चकार ॥ अंभोदनादमुदितांविपिनेमयूरीं संत्रासयन्निव धनुर्ध्वनिनापुलिंदः ॥ २१ ॥ ग० ॥ अयमेनामुपगंतुमुपक्रांतामकथयत् ॥ प० ॥ प्रियेज
नकनंदिनिप्रकृतिपेशलामीदृशींकथंग्लपयितुंसहेतवशिरीषमृद्वींतनूं ॥ गृहीतहरिणीगणत्रिकविसारिनानाशिराक्षतिक्षरितशोणि
तारुणदृक्कानने कानने ॥ २२ ॥ ग० ॥ तदनुनानाविधप्रयत्नशतेनाप्यनुन्मिषदनुजिगमिषाशैथिल्यायांमैथिल्यांलक्ष्मणेप्यनवसितानुगमन
व्यवसायेवासिष्ठायस्वयज्ञायभूषणमशेषंनागसहस्रेण सहशत्रुंजयाख्यमतुलंमातुलदत्तंहस्तिनमगस्त्यकौशिकाभ्यांचमहार्हाणिवर
चौनिवितीर्यनिर्जरारातिवीर्यमुषीधनुषीनिरपायत्राणकर्मणीवर्मणीनिर्मर्यादशिलीमुखकृतानुषंगौनिषंगौनिर्वर्तितवीरपाणौकृपाणौ
वरुणेनजनकमदसिदत्तमेतत्सर्वमादायममानुगच्छेतिसौमित्रिमन्वगृहीत् ॥ सीतापिनिजाभरणगणसुयज्ञपत्न्यैविदधे ॥ सौमित्रिरपि

॥ ॥ टिप्पण ॥ ॥ १ दृष्टां २ किरातः ३ स्वभावः ४ अनुगमनेच्छा ५ श्रेष्ठवस्त्राणि

स्वधनेनकंचित्कौसल्याश्रितमुपाध्यायमतोषयत्॥ तत्रसकुटुंबायत्रिजटाभिधानायद्विजातयेस्वहस्ततलनिक्षिप्तदंडदेशावधिकंगोधनंकां
पिल्यादिभ्योद्विजातिभ्यश्चरघुपतिर्वित्तानिविविधानिवितताार॥ ततस्तेपौरनारीणांविश्वासान्निश्वासजृंभानिलचलदधरकिसलयानाम
श्रुसलिलासारेणशोकपावकेनचवपूंषिमनांसिचसिक्त्वादग्ध्वाचनिषिद्धपरिजनानुगमनतयाप्रकाशितप्रवाससिद्धांताच्छुद्धांतान्निश्चक्र
मुः॥ तत्र॥ पद्यं॥ सीतापुरागगनचारिभिरप्यदृष्टामाभूदियंसकलमानवनेत्रपात्रं॥ इत्याकलय्यनियतंपिदधेविधाताबाष्पोदकेननयनानि
वारिरभाजां॥ ३३॥ रुद्धापियांतमनुगच्छतिमैथिलीमांवत्सोजहातिनकदाचनलक्ष्मणोपि॥ इत्येतयोरनुगतिंप्रतिबोध्यगंतुंभूयोपिराज
भवनंप्रविवेशरामः॥ ३४॥ गद्यं॥ तस्मिन्स्वमंत्रेणविज्ञाप्यदर्शितेदाशरथौभूपतिर्भूताविष्टइवविष्टरान्निपत्यसदारःसदारविंनप
रिदेवनोत्कंठांस्वयमप्यकरोत्॥ तदास्वमंत्रःकैकेयीमब्रवीत्॥ देविविरमविरमरामाभिषेकसमुन्मिषिताल्हादांकुगर्वंग्रहादाग्रहात्॥

॥ ॥टिप्पणं॥ ॥१ ददौ २ अंतःपुरात् ३ नेत्रगोचरं ४ निश्चित्य ५ अवर्षणं

पुराखलुब्रह्मणोवरप्रमादादवगतसकलप्राणिभाषणतयापर्यंकपर्यंतपरिसरान्निर्गलिकालापेक्षत हसंतंतवपितरंहसनकारणंपृष्ट्वात
द्विवरणंपन्कमरणहेतुरित्येवेत्यापिभूयसानिर्बंधात्कुपितेनगजावज्ञातायाःमातुर्स्लमार्गमानुकुर्वांथाइति ॥ ततः ॥ पद्यं ॥ कृतागसमंज
निर्यासमस्मगरंकेकयात्मजा ॥ निदर्शनेननिर्दिश्यनिरबध्नान्निजंपतिं ॥ ३५ ॥ तत्र ॥ सिद्धार्थकोमहामात्यस्तत्परित्यागमब्रवीत् ॥ सग
यूपतितानेकप्रजामरणकारणात् ॥ ३६ ॥ गद्यं ॥ अथदशरथंनरगमः सपरिच्छद एवगच्छतिनिर्दिष्टःकेवलंवनितत्रापिटकेवल्कलयुगुलं
च प्रार्थयत् ॥ प० ॥ स्रवोचितानांसुव्यक्तदिव्यलावण्यसंपदां ॥ त्रयाणामपिकैकेयीवल्कलादीन्युपाहरत् ॥ ३७॥ अथरघुकुलनाथां
मध्यमांवानियोगाद्गुणवतिपरिधानेमंगलार्हेनिराशः ॥ अधिकुचतटवल्काज्जानकीबाष्पसेकाद्पुलकरवरभावंवल्कलंपर्यधत्त ॥ ३८॥
ग० ॥ तत्रयेचित्रीयंतःसर्वेनिर्विकारवदनलक्ष्मीकमिक्ष्वाकुकुलाध्यक्षमध्यक्षयंतस्तेषामेवशोकशंकुसंकीलितमानसानामाननंयुपागंपर्ये

॥ ॥ टिप्पणं ॥ ॥ १ दृष्टांतन २ बद्धं

णास्फुरद्विकारः॥पद्यं॥ सवल्कलेदाशरथौविषादादामीलिताक्षोयदभूद्वसिष्ठः॥ तदेवजातंकरणंमहर्षेः काकुत्स्थयाथार्थ्यविलोकनस्य॥ ३९॥
अस्यपीतांबरत्यागेकिंजाताविक्रियापुरा॥ इतिप्रत्यकृदशांश्रेष्ठोवासिष्ठोनातिविव्यथे॥ ४०॥ ग॰॥ सोयंमैथिलीवल्कलधारणमरुणदरुणसारथि
कुलगुरुः॥ तत्र॥ प्रयाणायप्रणिपतंतींस्नुषामाश्लिष्यकौसल्यागद्गदमवदत्॥ प॰॥ घर्मेनिदाघकिरणस्यकरैःकुठोरैः कांतारमध्यपदवीषुनरत्न
पचासु॥ त्वांवीक्ष्यनिस्तुलपदांवनदेवताभिर्निर्दिष्यतेनियतमेवनिमेषहानिः॥ ४१॥ ग॰॥ अथमैथिलीनाथःसलक्ष्मणःसप्रदक्षिणंराजानंजन
नीजनंचप्रणम्यप्रतिषिद्धप्रतिहारवक्रोनिश्चक्राम॥ रथोदशरथाज्ञापरतंत्रेणसुमंत्रेणद्वारिसमानीतः॥ प॰॥ प्रारब्धयात्रस्यरघूद्वहस्यप्रागेवसीता
रथमारुरोह॥ आनीलरथ्यंरथमारुरुक्षोरन्हांप्रभोरग्रसरीप्रभेव॥ ४२॥ गद्यं॥ दाशरथीचरथमारुरुहतुः॥ पद्यं॥ यथायथारा
घवराजधानींविहायसीताविपिनोत्सुकाभूत्॥ तथातथाजायतयातुकामालंकांविनाराक्षसराजलक्ष्मीः॥ ४३॥ आबालवृद्धमनुग

॥ ॥टिप्पणं॥ ॥ १ सूर्यस्य २ अनुपमे ३ हरितहयं

त्तातिरामभद्रमेषापुरीतादिहमाखलु निर्गुणास्यात् ॥ इत्यादरादिवधराबहुधाविधायधूलिस्थलान्निजतनुंतमनुप्रतस्थे ॥ ४४ ॥ नृपसुतवि
मुखेनखेनकांतेनसाकंदुहितरिविधिपाकात्कानननायव्रजंत्यां ॥ अकुशलमितिमत्वानूनमन्वायधात्रीपरिजनमुखबाष्पंपांसुभिः पर्यहा
र्षीत् ॥ ४५ ॥ रामानुसारसहनिर्गतपौरवर्गासंस्थानमात्रगृहचत्वरराजमार्गा ॥ निर्मुक्तभोगभुजगत्वगिवक्षणेनलघ्वीबभूवरघुपुं
गवराजधानी ॥ ४६ ॥ गद्यं ॥ अथदशरथः सांतःपुरजनः पुरान्निर्गत्यगत्यंतराभावात्तमेवरामंस्वचिरमवलोकयन्नालोकपथमतिक्रांते
सुमंत्राक्रांतस्यंदनेरघुनंदनेस्यंदमानबाष्पप्रवाहोमोहमुपगम्यभूम्यांपपात ॥ ततः परिजनकृताश्वासाल्लब्धसंज्ञायराज्ञेकौसल्यासदनम
रोचत ॥ दाशरथिरप्यहमहमिकयासंमूर्छन्महाजनौघदुरवगाहतया मंदायमानस्यंदनवेगः सकलजनविवेककोकनदंमुकुलयन्मोहतमसान्
मसातटमुपागमत् ॥ चरमगिरिशिखरमपिसहस्त्रादीधितिः ॥ ५० ॥ आविः प्रलापमटवींभजतोजनस्यकाकुत्स्थपादविरहासहमानसस्या
॥ ॥ टिप्पणं ॥ ॥ १ दैवं २ साटिति

आर्त्तार्णपर्णशयनान्यभवन् गृहाणि मूलस्थलानि तमसातटभूरुहाणां ॥ ४७ ॥ ग० ॥ अथ निशीथिन्यां दाशरथिः सुमन्त्रेण संमन्त्र्य वंचितजन
संहतिरतिविनतानंदनेन स्यंदनेन वेदश्रुतिगोमतिनिष्यंदिनीनामनदीत्रयपरिष्कृतामिक्ष्वाकवे मनुना दत्तां वसुमतीमतीत्य विविधवनगहन
वीरुत्तृणपटलपिहितरथतुरगखुरमुद्रया पदव्या गंगातरंगसंगतमूलं गगनगंगालिंगितशृंगं शृंगबेरपुरालंकारमिंगुदीपादपं समुपागमत् ॥
तत्र ॥ प० ॥ दृष्ट्वा राममनेकजन्मरचितैर्दृश्यं शुभैः कर्मभिः श्रुत्वा मातृवरद्वयांदुपगतां वृत्तिं च वैखानसीं ॥ अन्युज्जृम्भितहर्षशोकजनितैर्बाष्प
निषादाधिपः शीताशीतगुणान्वितैरविरलैः संपृक्तवक्त्रोऽभवत् ॥ ४८ ॥ ग० ॥ सोऽयं सुहृत्समासाद्य गुहः कृतांजलिरंजसा रघुनाथमनुनाथितवान् ॥
देव पितृनियोगपरवशान्तःकरणमपि भवन्तं विज्ञापितुमज्ञातजानपदरीतिर्भारती मां मुखरयति ॥ अस्ति तावदनेकवीर्योद्भटभटवर्गदुर्गयुक्त
मनुपक्तभोज्यजातमंथरं मंथराहृदयतो दावेहमस्मदीयं राज्यं ॥ तदिदमनिशमथ मप्रवृत्तं परिगृह्य किंचिद्गुह्यपरिजनयोग्यभाजनमनुंज

॥ ॥ टिप्पणं ॥ ॥ १ तापसं २ हृष्टिंगनः ३ सिक्तं ४ वाणी ५ यथाकरं

नममुंचन्नेवतातादेशेनदेशोस्मिन्विस्मयनीयानुभावमुनिवृंदमंदाकिनीसंदर्शनेनमंदायमानजननीजनदुर्दशश्चतुर्दशादशारथकथिताः

समाः समापयतुभवानिति ॥ पद्यं ॥ तस्मिन्नित्थंप्रार्थनाभाजिसख्यौप्रत्याचख्यौरामभद्रः प्रियोक्त्या ॥ मातुर्वाक्याद्धन्तकेनाहृतं

मेगोत्रंक्षात्रप्रक्रियांनार्हतीति ॥ ४९ ॥ गद्यं ॥ ततस्तेनतदनुरोधेनरोधस्तरोरथस्तात्सुमंत्रनियंत्रितरथ्ययोर्दाशरथ्योरातिथ्यंसम

धुपर्ककर्तुमिवमंदमंदमरविंदवृंदस्यंदमानमकरंदबिंदुसंदोहवाहिनिवाहिनीतरंगमरुतिवातिकाननगमनावस्थांकाकुत्स्थस्य

प्रेक्षितुमक्षमायामिवक्ष्माभृतिचरमेतिरोहितायामन्हामधिदेवतायांसंध्यांचरमांरामः समाप्यतस्यांतरुमूलभुविलक्ष्मणकल्पितं

पर्णतल्पमभजत ॥ पद्यं ॥ रामेविदेहसुतयातरुमूलसंज्ञमंतःपुरंविशतिलक्ष्मणसौविदल्लम् ॥ निध्यायतंनियमिनामिनवाप्यदृ

ष्टिर्निद्रांनिरस्यनिषसादनिषादनाथः ॥ ५० ॥ गद्यं ॥ व्यतीतायांविभावर्यामर्यममरीचिवीचिमालाहारिणिपूर्वोर्वीधरमूर्ध्निविरचितजटा

॥ ॥ टिप्पणं ॥ ॥ १ नवत्सरान् २ वपुः ३ अस्तावने ४ मनोहारिणि ५ उदयाचलमस्तके

वंधोसहमानयादाशरथीभागीरथीकच्छ[1]मागच्छतां॥तत्रगमःप्रहृष्टचेताः सीतामाचष्ट॥ पद्यं॥ मेध्याभ्रमार्गपरिमार्गणदुर्नयस्यदिव्यौष
धिंकपिलकोपमहाज्वरस्य॥ तातानुतर्पणपचेलिमभागधेयां भागीरथीं भगवतीं शरणं भजामः॥ ५१॥ गद्यं॥ तदनंतरं रामः सांत्ववच
ननिवारितस्कमंत्रः ससौमित्रिर्मंगलानिप्रार्थयमानया तयामैथिल्या सहगुहेनानीतां नावमारुरोह॥ स एषनिषिध्यनिषादाधिपते
रनुगमनमपितूर्णमेवावतीर्णस्फारसरित्पूरः संपूर्णसस्यमत्स्याभिधानेजनपदेकृतपदश्चललक्ष्यवेधनश्चतुरश्चतुरो[2]मृगान्निहत्यकु
त्रचिद्वनस्पतिमूलेनिशामनैषीत्॥ अन्येद्युर्वन्येनपथाप्रयातास्तत्रभातिप्रतीयमानहोमधूमप्राग्भारंभारद्वाजाश्रममाश्रयंतश्चाभिवंद्यत
ममंदहर्षमहर्षिजनेनादिष्टवर्त्मनावैकैर्तनी[3]पूरोपप्लवंप्लुवेनवेणवेननिस्तीर्यशर्मधनजनसंनिधानशमितशात्रवसत्वचारित्रंविचित्रंचित्र
कूटमचलमभजंत॥ प०॥ अनुजरचितपर्णागारहृद्याश्रमाधस्त्वरभृतकुलवंचयःप्रचमैरंजितास्र॥ जनकदुहितृयोगाज्जातसाकेत[5]सौख्य

॥ ॥ टिप्पणं॥ ॥ १ जलप्रायं २ चतुःसंख्याकान् ३ यमुना ४ मुनिः ५ अयोध्या

श्चिरमरमतरामश्चित्रकूटस्थलीषु ॥५२॥ गद्यं ॥ अथमांवनवासवैरस्यादपिरामः समाह्वयेदिति प्रत्याशयापरतंत्रः सुमंत्रः कानिचिदहानि
गुहसकाशेनीत्वानिगशस्ततः प्रतिनिवृत्तोनिवृत्तोत्सवामयोध्यामासाद्यनिर्दोशगधिः सारथिरितिशोकातिरेकात्पौरजनजनितदीनाक्रंदमंदी
भूतनेमीघोषादवरुह्यरथाद्दशरथंप्रयाणोन्मुखप्राणंप्रोणंसीत् ॥ एतद्दर्शनेनविसंज्ञोदशरथः कौसल्यासुमित्राभ्यांसमाश्वासितः कथंप्रयातं
रामेणकथंकथितंमैथिल्याकिंदृतः सौमित्रिरितिमुहुर्मुहुरश्रुकुंठितकंठः सुमंत्रमन्वयुंक्त ॥ सोपिराज्ञेव्यजिज्ञपत् ॥ देवकथंब्रवीमिकठिनहृदयोहं
प० ॥ सेवारसानुगतपौरमनोरथस्यपारंरथस्यवसुनांतवर्तमानौ ॥ भूत्वाविदेहदुहितुर्नवसौविदल्लौभागीरथीतटवनेपथिकाबभूता ॥ ५३॥
किंतु ॥ देवत्वत्तनयस्यकुंतलभरंक्षीरैः स्वधेनूद्भवैः सेकुंनालमरुंधतीपतिरभूत्तस्याभिषेकोत्सवे ॥ सिक्तोहंतसएवमैथिलसुताबाष्पोदकोत्पाद
कैर्न्यग्रोधक्षीरैर्जटांरचयितुंक्षीरैर्निषादाहृतैः ॥ ५४ ॥ तस्याविदेहदुहितुः पदयोर्नखेषुलाक्षांविनाप्यरुणिमासहमाबभूव ॥ वन्येपथि ॥

॥ ॥ टिप्पणं ॥ ॥ १ मणनाम

यतमेनसहव्रजंत्यावैवर्ण्यमाविरभवन्नकदापिवक्रे॥ ५५ ॥सीतापतेः किसलयैः परिकल्प्यतल्पं संचार्यसत्वदमनायनिशासुदृष्टिं॥ धन्वीतदं
घ्रिभजनादिवपुण्यलभ्यादस्वप्नएववनवर्त्मनिलक्ष्मणोभूत् ॥५६॥ गद्यं॥ एवंक्रमंत्रनिवेदितपुत्रचरित्रश्वरमागिरिशिखरजुषिनिगमवसु
षिज्योतिषिहृदयलग्नशोकशल्यांकोमल्यामाश्वास्यनरपतिरित्थमकथयत् ॥ पुराखलुसरयूरोधसिविविधतरुनिवहपिहितवियस्वति
वेतस्वतिमृगयास्पृहयाकमपिसमयमगमं ॥ तत्र॥ पद्यं ॥ तोयादाननिदानपुष्करगजभ्रांत्यातपस्वीमयाविद्धःकश्वनशब्दवेधनविदापा
थः सरख्याहरन् ॥ तत्पित्रोर्जरदंधयोरनुमृतिंकर्त्तुंचितांचिन्वतोः शापोमय्यपतद्भवानपिमुतप्रेम्णाप्रणश्येदिति ॥५७॥ अहंवैश्यस्यशूद्रायां
जातस्तस्मान्नसंभयेत् ॥ब्रह्महत्येतिमामुक्त्वास्वर्गतोदुर्गतोमुनिः ॥५८॥ गद्यं ॥ तदवश्यंवश्यएवास्मिमृत्योरितिनरपतिः श्रुतिमार्गग
तरामएवविरराम॥ पद्यं ॥ मुनिशापकृतात्पत्तिर्विपत्तिर्निष्प्रतिक्रिया ॥ यतोदशरथायाभुदिदेशादशोमींदशां॥५९॥ किंबहुना ॥ नाकां

॥ ॥ टिप्पणं ॥ ॥ १ वेद २ करिशुंडाग्रं ३ जलं ४ दरिद्रः ५ कर्णमार्गः ६ अंत्यां

तंत्रिदिवंपरैःस्मरमनसांकांतानबंदीकृतानाकीर्णपुरुहूतशासनधरैःसाकेतबाह्यांगणं ॥ नादिष्टाःसचिवाश्चभूतलपरित्राणाययद्यप्यसौनाकंशो
कवशादगाद्दशरथोनास्थांवहन्वाहने ॥ ६० ॥ गद्यं ॥ अथदशरथप्रशंसामांसलैःकैकेयीनिंदाकंदलितैरामगुणकीर्तनद्विगुणितैरवरो
धवधूजनपरिदेवनारवैर्मुखरितेषुदिग्मुखेषु ॥ पद्यं ॥ अभूदराजकन्मानसद्रूणंगगनांगणं ॥ आलोक्यैवतथाशांतमशेषंचमहीत
लं ॥ ६१ ॥ गद्यं ॥ ततःप्रभातेवसिष्ठवचसातैलद्रोण्यांनरपतिंनिक्षिप्याक्षिप्रमेवभरतमकथितदशरथकथमेवआनयतेतिदूतान्केक
येषुप्रेषयामासुः ॥ तेपिजितपवनजवनयवनहयसंकोचितपथास्तरगपतिपुरेदुःस्वप्नदर्शनदूयमानमानसंभरतमभिवंद्यगुरुनि
देशंव्यजिज्ञपन् ॥ सोयंमातामहेनयुधाजितावानुज्ञातःकतिपयैरेवदिनैरतानिमित्तसंभूतसातंकःसाकेतमाससाद ॥ पद्यं ॥ अतिच
कितमतिःपुरैवपश्यन्पुरमयथापुरचारपौरवर्गं ॥ न्यविशतभरतःपरीतदूतःपितृभवनेपितृकाननादनूने ॥ ६२ ॥ सपितरमनवेक्ष्यतत्र

॥ ॥ टिप्पणं ॥ ॥ १ अयोध्या २ कराहे ३ स्मशानं

नुकूलः क्वचिदपिविपुलायांनास्तिचेद्दंडकायां॥ ७३॥ गद्य॥ इत्यकस्कारामसेवोत्सकमनानिश्चकाम॥ पद्यं॥ अनवधिरचयित्वासत
थेपांसुलत्वंभुवननयनसौख्यप्रातिकूल्यंचकृता॥ नरपतिगृहमध्याच्चूर्णमुद्घूर्णमानाकुटिलगतिरुदस्तान्मंथरानामवात्या॥ ७४॥ ततः॥
केशहस्तंस्वहस्तेनगृहीत्वातद्विधोद्यतं॥ कौसल्यावारयामासकुब्जांरामानुजानुजं॥ ७५॥ गद्यं॥ ततः॥ सांतःपुरएवपुरान्निर्गत्यशि
ल्पिवर्गसमीकृतसरणिर्भरतःपुरतःप्रसृतनरगजरथतुरगचरणक्षुण्णक्षोणीतलसमुत्कीर्णेनरेणुनिकुरंबेनजंबालयन्नंबरगंगांगंगांच
स्कमंत्रभणितगुणनिवहगुहानुमत्यानिस्तीर्यदूरादेवाश्रमद्वारिनिवेशितबलभारोभरद्वाजाभिवंदनमकरोत्॥ सोयंप्रीतमनामुनिर्भरतं
तज्जननीजनमपिप्रत्येकमालोक्यसेनामप्याहूययथोचितमातिथ्यमकुरुत॥ प॰॥ तथातिथ्यंचक्रेभरतबलभाजांतनुभृतांभरद्वाजःसो
यंभ्रूकुटिभटकल्पाखिलसुरः॥ तपस्तस्याघोरंदिविसकेमनस्तत्फलभुजोयथातेषांतोषंक्षणमभिलषेयुर्मुनिकृतं॥ ७६॥ गद्यं॥ इतिदिनंदिनशात

॥ ॥ टिप्पणं॥ ॥ १ अमर्यादं २ सदोषत्वंमरजस्कत्वंच ३ वक्रगतिः ४ केशकलापं ५ शत्रुघ्नं ६ मार्गः ७ चूर्णितं

कलत्रंतत्रनीत्वामुनेर्निर्देशेनसर्वेपिचित्रकूटवनोद्देशमविशन् ॥ तत्रसन्यस्तसैन्यस्ततइतोगुहेनसहराममन्विष्यन्हव्यगंधिनागंधवहेनहोमधू
मेनचदूरादेवविभाव्यमानमचपलमृगगणमदृश्यरूपाभिर्वनदेवताभिरवकीर्यमाणबलिकुसुममशेषतपिशिताशनपिशाचोच्चाटनमंत्रायमा
णलक्ष्मणचापघोषश्रवणसमुचितसामीप्यप्रदेशंनूतनपरिकल्पितपर्णशालावास्तव्यवैखानसकुटुंबिनीनिबिडितभूभागमनोकहशाखावलं
बमानवल्कलाजिनममुंतरुशाखारचितैरंबरचरपतिसेनागणकरकिसलयविमुक्तैरभिनवपल्लवभंगशाबलैः कुसुमनिकरैरभ्यर्च्यमानजान
कीनिवासतरुमूलवेदिकमालक्ष्यमाणखड्गकार्मुकनिषंगमतिथिजनसपर्यापर्युत्सुकसौमित्रिसमाहृतकंदमूलफलकल्पितैकदेशमेवविनाभूत
जनकदुहितृचरणनलिनविन्यासमपहसितसाकेतरामणीयकंरामाश्रमंभरतः ससंभ्रममभजत ॥ ५० ॥ अथावासंशांतेरकृतसुकृतानाम
सुलभंनवांभोदश्यामंनलिननयनंवल्कलधरं ॥ जटाजूटापीडंभुजगपतिभोगोपमभुजंददर्शश्रीमंतंविपिनभुविसीतासहचरं ॥ ७६ ॥ ततस्त

॥ ॥ टिप्पणं ॥ ॥ १ तापसः २ अविरहितः

स्योपांतेजनकयजनाधीनजननांववंदेवैदेहींरजनिकरलेखामिवनवां॥ अरण्यानांपुण्यात्पदकमलमुद्रापरिचयादयोध्या[1] संध्रीचीमवि
कलमवस्थांविदधती॥७८॥ स्वतःसिद्धंयस्मिन्निनरघुवापंक्तिजयतेसुमित्रापुत्रत्वादपिजगतिरामानुजपदं॥ यदीयाक्षिद्वंद्वप्रतिनिधिभवे
दंबुजयुगंनिशीथेनिर्निद्रंयदितमपिसाक्षादकृतसः॥७९॥ ग०॥ तदनंतरंमरुपथेप्रथिततरग्रीष्मोष्मणिदैवात्कृतोपलंभमंभोरुहतटाकंसुधाधारा
पूरितापंभूरितापःसतृष्णइवक्षुण्णसारःसरभसमुपेत्यनिपत्यपादयोश्चिरतरंरुदन्दशरथकथामपिकथित्वामैथिलीसहितायसलक्ष्मणायरामा
यशोकमूर्च्छांप्रायच्छत्॥जननीजनोपितत्रनिपत्यसुचिरमरोदीत्॥प०॥वेलोल्लंघनमेतेषांशोकोदन्वतितन्वति॥ अैगस्त्यायितमेतस्मिन्वसिष्ठे
नात्मवेदिना॥८०॥ गद्यं॥ ततःप्रपद्यसंज्ञामनुज्ञयागुरोरमरसरितिविरचितसमुचितनिवापकृत्यंप्रणिपत्यराममसकृत्प्रवर्तयितुंभरतःप्रार्थ
यत्॥ वितर्कनकुलस्ययदनुकूलंगुणगणस्ययदनुगुणंयशोरूपस्ययदनुरूपंसमाचारस्ययत्समुचितंप्राचीनभाग्यस्ययद्योग्यंलोकगर्हणीया

॥ ॥टिप्पणं॥ ॥ १ सदृशीं २ विकसितं ३ अगस्त्यवदाचरितं

ययदनर्हश्रुंतस्यवायत्तदशांतादशमाशयंप्रकाशयंती भरतोपज्ञाविज्ञापना ॥ तत्क्षणंक्षणप्रभाभंगुरलक्ष्मीसमावेशलक्ष्मणिक्षोणीपतिशातधृतोऽस्ति
तेमुकुटेविघटिताशारामंप्रणिपत्यसादरंमांपादुकाभ्यांपरिकुरुतं युवामितिरघुवरचरणद्वयंस्वयमेवप्रार्थ्यपरिरचयितुंस्थंडिलशायिचरितमिवब
भारभरतस्योत्तमांगं॥ तथाहि॥ पद्यं॥ त्वयामयाचकर्तव्यंसत्यवाचःपितुर्वचः॥ इतिप्रत्यादिशद्रामोभारतीमपिभारतीं ॥ ८० ॥ गद्यं ॥ जाबा ५प्रा
र्थनायामपिव्यर्थायाम् ॥ पद्यं ॥ भरतस्तदनुप्रार्थ्यलेभेलाभविदांवरः ॥ काकुत्स्थपादुकाकारंमहर्घमुकुटद्वयं ॥ ८१ ॥ सएषसानुजः प्रायादयोध्यां
भ्रातृशासनात् ॥ अटवींपितृसंदेशाद्ययौरामःसलक्ष्मणः ॥८२॥ विलंघ्यविविधान्देशान्भरतोधृतवल्कलः॥ विषयंसमुपाश्रित्यविषयेविमु
खोभवत् ॥ ८३ ॥ गद्यं ॥ ततश्चापंयावदार्यस्यप्रत्यागमनंनातदयोध्यांनाध्यास्ते ॥ तस्मिन्नवधिमतिक्रम्यचिरायतिसद्यएवाश्रयाशमाश्रि
त्यप्राणानपिनिंदिष्यामीतिनंदिग्रामसंज्ञमाश्रममाशिश्रयत् ॥ दाशरथिरपिश्रमधनजनकथितनिशिचरगणरचितकदनपरिहरणाय
॥ ॥ टिप्पणं॥ ॥ १ शास्त्रश्रवणस्य २ विद्युल्लता ३ मस्तकं ४ महामूल्यं ५ देशं ६ इंद्रियार्थे ७ अग्निं ८ मुनिजनः

गहनजठरमवजगाहे ॥ पद्यं ॥ विस्तीर्णाक्षैर्विपिनहरिणैर्वीतभीतिप्ररोहैर्दर्भग्रासेप्यकृतरुचिभिःसस्पृहंवीक्ष्यमाणः ॥ रामःप्राप्यप्रकृति महितंस्थानमत्रेर्महर्षेर्जग्राहास्यप्रमुदितधियःप्रेमपर्यांसपर्यां ॥ ८४ ॥ गद्य ॥ सीतामप्यनसूयाभिधानास्यपत्नीस्वभूषणैरतोषयत् ॥ पद्यं ॥ खंडनायवरूथावधूमनःपुंडरीकतुहिनात्विषांद्विषां ॥ दंडकावनमवापराघवश्चंडभानुरिवमेघमंडलं ॥ ८५ ॥ ॥ इति विदर्भराजविरचितेचंपूरामायणेश्रीमदयोध्याकांडःसमाप्तः ॥

॥ अथारण्यकांडः ॥

॥ प० ॥ प्रविश्यविपिनंमहत्तदनुमैथिलीवल्लभोमहाबलसमन्वितश्चलितनीलशैलच्छविः ॥ निशाचरदवानलप्रशमनंविधातुंशरैश्चचारसशरासनःसुरपथेतडित्वानिव ॥ १ ॥ ग० ॥ ततः ॥ कंडूलापनयनपटुभुंडालकपोलकषणविषमितानमितविकटविटपसालखंडनिर्यातनिर्यासगंधानव्यात्तगंधानुविद्धानैश्चाहुतिगंधैर्धूमस्तोमैरनुमीयमानाविनाभूतजलाशयानाश्रमभागानभितश्चरतोरातिथ्यशमितमार्गश्रमयोर्दाशरथ्योरध्वानंतरसारुरोधविराधाभिधानोय

॥ ॥ टिप्पणं ॥ ॥ १ पूजितं २ युक्तां ३ पूजां ४ सूर्यः ५ बाणैः जलैश्च

तुधानः॥ सएषरोषभीषणस्त्रिशिखशिखरावतंसितविविधमृगशावशातः शातह्रदातनयः सीतामपजहारस्याजहारचदाशरथी॥ कौयुवांयुवानौ कुत

स्त्यौवामाचारवत्प्रतिभातिमेवामाचारः॥ चीरंवपुषिजटाशिरसिकरेचचंडकोदंडः कायमाकल्पः कचनकल्पलताकल्पयमनल्पाभरणानरू

णीति॥ दाशरथिरपिकथितनिजान्वयोविराधांकेवेपमानांविदेहराजदुहितरंविलोक्यसकोपः सौमित्रिणासाकंरक्षोवक्षसिशिलीमुखान्नि

जघान॥ ततः॥ पद्यं॥ विशिखेविशिखेतत्रविधात्रवरवर्मणि॥ सीतांनिक्षिप्यविक्षेपभूलंरक्षोरघूद्वहे॥ २॥ तदनुभूलमखंडयदंजसा

शिताशिखंरघुनायकसायकः॥ नियतमेवविराधविरोधिनांहृदयभूलमपित्रिदिवौकसां॥ ३॥ गद्यं॥ विराधोपिक्रुधासरभसमभिपत्यस्कं

धेनिधायरामलक्ष्मणौगतिनिरोधापराधपरिहरणायैवमिहिरहिमकरौप्रस्थेवहन्विध्यइवप्रतस्थे॥ रामस्तत्रविराधवधोद्युक्तंसौमित्रिमेवम

भिदधे॥ प०॥ यातुनःपदवीसेयंयातुनश्वास्यलक्ष्मण॥ यातुकामंतयैवेदंयातुकामंनहन्यतां॥ ४॥ अयिकवलयमामभूविमुंचेत्यतिकरुणंरुद

॥ ॥ टिप्पणं॥ ॥ १ सूर्यचंद्रमसौ २ मानौ

नीमवेक्ष्यसीतां ॥ अरमरचयतामुभावसिभ्यांपिशितभुजंभुजभारहीनमेनं ॥ ५॥ ग० ॥ ततस्तीक्ष्णतरक्षुरप्रप्रहरणगवाक्षितवक्षसारक्षसानप
रित्यक्तेषुप्राणेषु॥ पराक्रमविषयपराक्रमौप्राक्रमेतामेतौतदंगगालितरुधिरधारासेकेनखननक्षमायांकाननक्षमायांराक्षसशरीरोचितंविकटम
वटमुत्पादयितुं ॥ तत्क्षणमेवक्षणदाचरोपिसंजातप्रत्यभिज्ञः सन्रामंव्यजिज्ञपत्॥ आत्मनोगंधर्वकुलसंभवंरंभापरिरंभतत्क्रवणकुपितवैश्रवण
दत्तरक्षोरूपिणींशापव्यापदंतस्यास्तथाविधमवसानंच ॥ पद्यं ॥ रक्षोवधः प्रक्रतइत्ययमेवशंसेत्स्वर्गायगायकपदंगमितोविराधः ॥ नागालयाय
वपुरस्यवदेदितीवश्वभ्रेतदक्षिपदिषुप्रहतंसरामः ॥ ६॥ गद्यं ॥ तदनुनाकलोकभजनायपुरुहूतेनसमाहूतस्यभगवतः शरभंगस्याश्रमपदंर
घुपतिरभजत ॥ तत्र ॥ पद्यं ॥ दशाशतनयनेपिवीक्ष्यमाणेदशरथपुत्रसिषेविषैवजाता ॥ मनसिजशरभंगकारिवृत्तेर्मनसिमुनेः श
रभंगनामभाजः ॥ ७ ॥ गद्यं ॥ समुनिराश्रमस्थंकाकुत्स्थमातिथ्येनसमाराध्यतत्सान्निध्यात्पुद्दांमंत्रपूतामाहूतिमिव आत्मनस्तनुंतनूंन

॥ ॥ टिप्पणं ॥ ॥ १ आलिंगनं २ आरब्धः ३ गर्तं ४ आनवदसि

पातिपानयित्वाशाश्वतंपदंसमाश्रितवान् ॥ ततः सुतीक्ष्णतपसः सुतीक्ष्णस्यतस्यनिदेशाद्देशात्तस्मादुच्चलितः सलिलनिधिपानसंभावितजीवना
भावशंकयाशरणाश्रयणायलंबमाननीलांबुदकुटुंबसंदेहावहेननानानोकहनिवहेनपिहिताभोगमगस्त्याश्रममाससाद॥ अकथयच्चमैथिलीं ॥ प
द्यं ॥ तस्येदमाश्रमपदंसरसीरुहाक्षिसंख्याविहीनमहिमैकनिकेतनस्य ॥ भर्तासमस्तसरितांकुपितस्ययस्यहस्तारविंदमकरंददशामवाप ॥ ८ ॥
इहसमदगजेंद्रन्यस्तहस्तातिभागप्रथितविनमितशाखः सल्लकीवृक्षएषः ॥ अभिनयतिनिकामंसंगतोच्छायहानिर्मुनिवरकरपाताद्भुग्नविंध्या
द्रिमुद्रां ॥ ९ ॥ अस्मिन्महापथधियावदनंविगाह्यनिर्गंतुमक्षमतयाजठरेलुठद्भिः ॥ वन्यैर्गजैरजगराः पिशिताशनेभ्योवातापिदानवद
शामुपदेशयंति ॥ १० ॥ तत्र ॥ चुलुकगतसमुद्रास्वादकेकुंभयोनेरितरकरनिरस्तामक्षिकोत्सारनीत्या ॥ गगनगतिविहीनायेघनाः प
ल्वलांतेविपिनमहिषवेषैः कवलंतेवलंते ॥ ११ ॥ गद्यं ॥ एवंविपिनविलोकनविस्मितमनिस्तदुटजनिकटमामाद्यरामः शिष्यैः प्रवेशितः म

॥ ॥टिप्पणं॥ ॥ १ कृष्णमेघः २ समूहेन ३ पर्णशाला

कललोकवंद्यमानचरणारविंदमरविंदभवमिववृंदारकवृंदैः परिवृत्तंकोपहुंकारनिरहंकारायनहुषायभुजंगभावदूषितायदत्त
भुजंगभावंखगगतिनिरोधकल्पवैपुल्ययोर्दुरवगाहमहावनयोर्विंध्यशैलसिंधुराजयोर्गाधतागाधतातस्करकरोदरमुदरजा
तजातवेदो जित वातापिदानवावलेपंलोपामुद्रावल्लभंसकलसरिद्वल्लभनिःशोषीकरणबोडवंब्राह्मणश्रेष्ठमपास्तसमस्ता
शामप्युपगतदक्षिणाशादृष्टैकतानजन्मानमपिकुंभजन्मानंभगवंतमगस्त्यमपश्यत् ॥ पद्यं ॥ प्रभामिवार्कीतमसांनिहंत्रींब्राह्मींद
धानंनियमेनलक्ष्मीं ॥ तपोनिधिंशौर्यनिधिःप्रपन्नः स्वनामसंकीर्त्यननामरामः ॥७२॥ ग॰ ॥ ततःपरमहर्षेणमहर्षिणा प्रणीताभिराशी
र्भिः सहमुरशासनंशरासनंसरसिजासनास्त्रंसोत्रामणंतूणीरयुग्मंरुक्ममयकोशंखड्गंचप्रगृह्यतदाज्ञयागोदावरीतटप्रकटि
तांपंचवटीमसेवत ॥ तत्रविस्तृतपक्षद्वंद्वमप्यप्रतिद्वंद्वशौर्यशौर्यावस्थाप्रत्ययायक्ताताप रोक्षमिवतार्क्ष्यंमहामहीध्रकल्पंगृध्रराजम

॥ ॥ टिप्पणं ॥ ॥ १ गर्वं २ वडवाग्निं

द्राक्षीत् ॥ प० ॥ पानेनहीनजलमब्धिमपास्य नूनंमैनाकएषमुनिमाश्रयतीतिजानां ॥ शंकामिमांरघुपतेः कथितात्मवंशस्त्वत्तानमित्रम
हमित्यदरज्जटायुः ॥ १२ ॥ ग० ॥ रामस्तदशरथमिवतंपश्यन्काश्यपकुलसंभूतंसंपातेरनुजमनुजरचितपर्णशालः पंचवट्यांकंचित्काल
गमयामास ॥ अथकदाचिदुपचीयमानमनोभववैभवः पाककपिशकलममंजुमंजरीपुंजपिंजरीभूतकेदारप्रपंचः पंचबाणप्रयाणोचितवीरपा
णवत्पत्रपुटपात्रदृश्यावश्यायबिंदुसंदोहश्चंद्रातपेनिरानंदतां चंदनानुलेपननिर्लोलुपतां चंद्रशालायांनिराशतां चंद्रकांतस्थलेनिरास्थ
तां ॥ वातायनसेवनेनिरुत्सुकतां वापीकूपोपकंठेनिरुत्कंठतां वासरावसानेनिरादरतां वारिविहारेनिराकांक्षतामुत्पलमालायामुपेक्ष
तामुपवनभजनेष्युद्विग्नतांजनानां जनयन्गंभीराभोगगर्भगृहस्यचघनेष्टिकारचितभित्तिश्लक्ष्णतिरस्करिणीपटलस्यचशशोद
रलोममृदुकंबलस्यचकालागरुधूमस्यचकाश्मीरांगरागस्यचनिर्धूमांगारभरितहसंतिकायंत्रस्यचस्फभगंकरः करेणुकरनिकरवर्त्म
कणायमानतुषारधूलिधूसरवासरः सरसीरुहगहनदावपावकस्तुहिनव्रणितलासिकाधरदूरीकृतवंशकृत्यः प्रक्षीणतारुण्य

पण्यांगनांगवत्मयातसौभाग्यप्रपासन्निवेशास्तालवृंतविश्रांतिकरः कामिनीस्तनभरगिरिदुर्गसीम्नि निर्भयनिलीननिदाघभावो
दिवाभीतव्रातस्याप्यनतिभयंकरदिवाकरश्चकोरनिकरस्याप्यनतिक्षेमंकरनिशाकरः कादंबकदंबस्याप्यनतिप्रीतिकरकमलाकरः
करयुगकृतस्वस्तिकाबंधनतयानीहारांतकशंकया हृदयकमलमिव गोपायंतमश्रांतदंतवीणाव्यापारवेपमानाधरपुटतया शीतिका
पिशाचिकानिर्हरणाय निपुणमंत्रजपमिव कुर्वंतमविरलपुलकपालीकंबलितकलेवरतया सकरुणविधिवितीर्णरोमकंबलकृतांगरक्षमि
वभिक्षामटंतं दुर्गतवर्गं निर्घृणाकदाचिदपि कमलानालोकयती तितस्यै सासूयइव नदीयावासतामरसकोशं नाशयन्नं गजमतंगजकर
पुष्करोत्थितशीकरनिकराकारैरतिपरुषस्मरशरजाततापप्रतप्तगगनांगनांगस्त्रवत्स्वेदबिंदुसदृक्षैरक्षीणमहिमहिमप्रसारैरध्वगांतः
करणानि सीमंतयन् हेमंतसमयः समुदजृंभत ॥ पद्यं ॥ यत्रकांता न पश्यंति क्लांतां विरहवन्हिना ॥ निशावसानवेलां च क्लोंवव्यसनांबुधे॥
॥१४॥

॥ ॥टिप्पणं॥ ॥ १ दरिद्रसमूहं

ग०॥ तत्रपर्णशालामध्यमध्यासीनंलक्ष्मणाग्रजमुपसमर्पशूर्पणखा॥ पद्यं॥ तस्मिन्नुज्जृंभितोष्णस्तनतटदयिताहीनसंहारकालेकालेप्रा
मति
लेयधाराकवचितगगनभोगादिक्चक्रवाले॥ कामंधाराक्षसीसापतिंमतनोन्मैथिलीप्राणनाथेलक्ष्मीलीलारविंदेनवपिशितधियंतन्वती
श्येनिकेव॥१५॥ गद्यं॥ ततस्तेनजानिकीजानिरितिजानीहिजनममुंममानुजमतिमनुजबलमबलावियुक्तंयुक्तमाश्रयितुंतवेति
रामेणप्रत्याख्यातासौमित्रिमुपेत्ययथामनीषितमभाषत॥ तेनापिभद्रे,तस्यार्यस्यदासोहंदासभार्यापदमनार्यमार्यायाःकुलसंभूताया
स्तस्मात्तमेवभजेथाः॥ किंच॥ क्रूरसत्वभयानककाननसंचाराचतुरांविहायवैदेहींतत्रभवतीमेवासौपरिग्रहीष्यतीतिलक्ष्मणेनाभिहि
ताविहिताहितमितिनिर्दायंवचनममनुत॥ प०॥ दशरथात्मजयुग्मनिरीक्षणक्षणसमाकुलबुद्धिरियंदधौ॥ उभयकूलसमुत्थितशाड्वलभ्रमगताग
तखिन्नगवीदशां॥१६॥ वृषस्यंतीवृषस्कंधंराघवंरावणानुजां॥ भूयःशूर्पणखाभेजेशूर्पकारानिबाधिता॥१७॥ ग०॥ तदनुजनकदुहितुरनित्यु

॥ ॥ टिप्पणं॥ ॥ १ कामपीडिता

वतियोग्यभाग्यरामस्यरामर्णायकंनिरूप्यपुनरेवमचिंतयत ॥ पद्यं ॥ लावण्यांबुनिधेरमुष्यदयितानामनामिवंनंजनंकस्मात्नाम्हजदस्मदन्व
यगुरोरुत्पत्तिभूः सद्मभूः ॥ आस्तामेतदरण्यवासरसिकेहाकष्टमास्मिन् जनेकांतिकाननचंद्रिकासमदशांकिंनिर्ममेनिर्ममे ॥ १८ ॥ सीतामाह
र्तुकामामसकृल्भाविषयप्रार्थनोद्दामकामांसामित्रिः शस्त्रपाणिर्दशमुखभगिनींतामनार्यांनिवार्य ॥ कामक्रोधाधिकानामहमहामिकयाप्रेंखना
मायतानांतस्याः श्वासानिलानामकुरुतनरसामार्गविस्तारकृत्यं ॥ १९ ॥ गद्यं ॥ ततस्तस्यानिकृत्तकर्णनासिकायाः कनीयस्यापरिभवंवदनेवच
नेचदृष्ट्वाश्रुत्वाचजनस्थानवर्तीसमरमुखमुखरः खरश्चतुर्दशसहस्रसंख्यश्चतुर्दशाध्यक्षरक्षितंरक्षोबलंरामलक्ष्मणौजिघृक्षुः प्रेषयामा
स ॥ अथदाशरथिर्निरीक्ष्यादिक्षुरक्षोगणमुपसर्पंतमपसर्पभूतयातयाशूर्पणखयानिर्दर्शितरारणिमरणिमिवमंथनात्प्रागनाविष्कृततेजः
प्रसरंसीतारक्षणेलक्ष्मणमादिश्ययातुधानवधंतथाविधमतनुत ॥ तपोधननि चनकरकरानिकुरंबमिदंपरुषभाषणस्पृहयालुतालु

॥ ॥ टिप्पणं ॥ ॥ १ ममताशून्ये

जालमिदंपरदारनिरीक्षणनिरपत्रपनेत्रद्वंदमिदमितिनिशिततरशरशतशकलितनिशिचरावयवानाहृत्याहृत्यप्रत्युटजंदर्शयद्भि
स्तपोधनाध्वशुद्धिंविदध्वमितिगृध्रराजनिदेशाद्दिवदेशांतरादापतद्भिःपतद्भिःकंकप्राचीकप्रायैरनवकाशमभूदाकाशं॥ तत्रनिकृत्तशिरसित्रिशि
रसिविस्रगंधिनाशरीरश्चुतवसास्रोतसाप्रेत्यापिक्रियमाणाश्रमदूषणे दूषणे रोषभीषणवीक्षणः खरैःखरः राघवमाहवायाह्वयत ॥ तत्रवि
पश्चिद्भिरप्यनिश्चीयमानजयापजयमनिमिषैरप्यननुसंधीयमानशरसंधानमोक्षमभूदभूतपूर्वंद्वंद्वयुद्धं ॥ तत्रखरोगृहीतकोदंडस्त्व
सकृदनुभूयमाननमनोन्नमनायासः समरसमापनचतुरश्चतुराननास्त्रसंधानार्हदाशार्हशरासनंग्राहयितुकामइवरामहस्तात्प्राक्तनं
चापंशरैरपजहार ॥ सोपिकोपपावकपावकिताननः कुंभसंभवदत्तंधनुराधत्त ॥ पद्यं ॥ खरपरुषिशरासनेगृहीतेखरकिरणान्व
यशेखरेणतेन ॥ खररघुवरयोरणंसमाप्तंखरनखरैरवरायुधयोरिवक्षणेन ॥ २० ॥ खरवधपरिशुद्धे दंडकारण्यभागेमुनिभिरभिहितानां

॥ ॥ टिप्पणं ॥ ॥ १ दुर्गंधिना २ भयंकरः ३ व्याघ्रः

माशिषां तादृशीनां ॥ स्वयमचरमपात्रं स्वैर्गुणैर्मंथराभूत्तदनुमनुकुलेंदुः सानुजः शौर्यराशिः ॥ २१ ॥ तथाहि ॥ प्रागमंथरेतिमहिषीतिवरद्वयी
तिधर्मव्ययव्यथितभूपतिभारतीति ॥ काकुत्स्थकाननकथेतिचसंतिसंज्ञाः पौलस्त्यभीतिभुवनत्रयभाग्यपंक्तेः ॥ २२ ॥ ग॰ ॥ अथशूर्पणखालंकामपिजन
स्थानमिवविजनस्थानकाकुत्स्थेन कारयितुं दशकंठोपकंठे कृत्येवनिपत्यरामलक्ष्मणयोर्याथातथ्यं वैदेह्यादेहसौंदर्यं खरप्रमुखैः साकमनीकस्य
चतुर्दशसहस्रसंख्यस्यपंचताकरणकारणभूतामात्मावज्ञांचविज्ञापयामास ॥ पद्यं ॥ सदंडकायांकृतदंडकायांस्वसारमेनांप्रथितस्वस्वारः ॥
निशाम्यरामस्यनिशाम्यवृत्तंचक्रेरुषंराक्षसचक्रवर्ती ॥ २३ ॥ गद्यं ॥ ततः प्रस्थाप्यजनस्थानेराक्षसानष्टौनष्टमतिरयंताटकेयंहाटक
मृगंपुरस्कृत्यसीताक्रयांहरिणींग्रहीतुंतस्यावसथमाससाद ॥ मारीचोप्याकर्णितरावणमतिः प्रयत्नशतैरप्यनिवार्यमाणेतस्मिन्
रावणेस्कबाहुमेवबहुमन्यमानोगत्यंतराभावात्तदभ्यर्थनामभ्युपेत्यजातरूपमयमृगरूपंगृहीत्वासीतांवंचयितुंपंचवटीमगाहत ॥

॥ ॥ टिप्पणं ॥ ॥ १ प्रथमभाजनं २ दृष्ट्वा ३ स्वर्णमयं

दशामुखोपिजलधरपथस्थापितरथोदाशरथिविघट्टनेरुतास्यमस्थो ॥ पद्यं ॥ विपिनमर्वगाहे[ज]राक्षसानांकरोटीरसकृदसकृदाविर्वाष्पमालो
क्यशोचन् ॥ कृतरुचिरविवर्त्मन्यंकुशानांकुशानांपथिकचरणलाविन्यंकुरन्यंकुरेषः ॥ २४ ॥ तदनुजनकपुत्रीयाचयातञ्जिघृक्षुर्हरिणम
नुजगाहेचापमादायरामः ॥ समयइतिचभेजेपाशमातन्यमृत्युः कुशिकसुतमखाजोभ्रष्टमेनंजिघांसुः ॥ २५॥ आकृष्यदूरमुटजा
दथदर्शितांगः क्रव्यादएपरघुनाथशरेणविधः ॥ कोनस्वरेणतनुतांविजहोहतो स्मीत्यार्तस्वरेणसहरामवचोनिभेन ॥ २६ ॥ गद्यं ॥ ए
तदाकर्ण्यविदीर्णहृदयाहृदयदयितप्रेम्णा कर्तव्याकर्तव्यमजानाना जानकीजानीहिभ्रातरमितिसौमित्रिमादिदेश ॥ ततश्चार्येनका
र्यमिदमादिष्टंदिष्टदोषान्मिथ्याप्रतीतिः परभवतिभवतीपरंत्रिभुवनैकधनुर्धरस्यशौर्यराशेः रामार्यस्यकः श्रद्दधीतकौणपघुणानिमि
त्तांविपत्तिमितिप्रणिपत्यप्रत्याचक्षाणंहृदयतोदकारिण्यावाण्यामोहविकलामावक्तर्जयत् ॥ भूयोपिलक्ष्मणः परुषभाषणभाषि

॥ ॥ टिप्पणं ॥ ॥ १ मृगः २ स्ववर्ण

णींप्रजावतीमेवमभाषत ॥ पद्यं ॥ स्मर्तुर्मम स्मर्तिरसत्यमंबा यदासीन्नदभ्रजमवितर्कमातृसंपर्कसौख्यं ॥ अहह विधिविपाका
द्याहरंती दुरुक्तिं त्वमसि विपिनमध्ये मध्यमांबा हिजाता ॥ २७ ॥ गद्यं ॥ इत्युक्त्वा भ्रातृजायां भ्रातृसमीपगामिनि लक्ष्मणे तत्क्ष
णमेव रंध्रान्वेषी दशकंधरः स्यंदनं विहाय विहायस्थलादवतीर्य निजांतःकरणे प्यमांतं रागं बहिः प्रकटयन्निव धृतकाषायपटः स
न्यासिवेषः पर्णशालामाससाद ॥ पद्यं ॥ रामाश्रमाद्विगतलक्ष्मणसन्निधानाल्लीतां जहार चपलः पिशिताशनेंद्रः ॥ मालां महोत्पलम
यींपललभ्रमेण देवालयाद्विनिरस्तजनादलर्कः ॥ २८ ॥ हा नाथ क्व चिरायसीति बहुशो व्याकुश्यबाष्पाविलं चक्षुर्दिक्षु विमुंचतीं दशर
थस्याद्यामवेक्ष्य स्नुषां ॥ रेरे रावण मा वधूं प्रति रुधा मुंचेति गृध्राधिपो रुध्वाध्वानमनल्पकोपमकरोदग्रे वणं रावणं ॥ २९ ॥ समभूत्समये त
स्मिन्समरं समरंहसोः ॥ मिथो मथनसंक्रुद्ध गृध्रराक्षसराजयोः ॥ ३० ॥ दशमुखरथमाशुध्वस्तरथ्यं विसूतं शिथिलतरवरूथं शीर्णचक्रं सच

॥ ॥ टिप्पणे ॥ ॥ १ सारमेयः २ पराक्रमः ३ विक्षिप्त

के ॥ गरुदभिहनशक्तिप्रासबाणासिखड्गनिशितविशिखतूणीपाशकुंतः शकुंतः॥ ३१ ॥ राक्षसासिक्षतःक्षिप्रंपपातपततांवरः ॥ मै
थिलीपक्षपातेनपक्षपातमवापसः ॥ ३२ ॥ गद्यं ॥ तत्क्षणमन्यरथाधिरूढेनरावणेनभूयोपिनीयमानाजानकीऋष्यमूकशृंगेसंगतप्लवं
गपंचकेपंचचूडाधरइवक्ष्माधरकुमारेकस्मिंश्चित्सुग्रीवसात्कृतदशग्रीवप्रतापानलसदृशंवालिविनाशपिशुनंमहोल्कापातप्रति
मंरामसाहाय्यप्रोत्साहनायपुत्रमभिपतत्पतंगबिंबशंकावहंकनककपिशकौशेयमयोत्तरीयांतरितमाभरणभारमपातयत् ॥ त
त्पतनमपिस्वतेजः पतनमिवनपश्यन्लंकालंकारभूतामशोककवनिकांमैथिलीमनयदनयज्ञोदशग्रीवः ॥ पद्यं ॥ अशोकवनिका
लेभेराक्षसीपरिवेष्टितां ॥ सीतांमारुतिवालाग्निस्तंभनार्हामिवौषधिं॥ ३३॥ काकुत्स्थोप्यथरक्षसामधिपतेर्वाग्वागुरावेष्टितेक्ष
त्वा हाटकताटकेयहरिणेशार्दूलविक्रीडितं ॥ आगच्छन्ननुजेनतत्रगदितामाकर्ण्यवार्तांततः सीतासंगमलालसस्तदुटजंराम

॥ ॥ टिप्पण ॥ ॥ १ पक्षिणां २ सूर्यः

प्रतस्थेद्रुतं ॥ २४ ॥ अयंकथंस्यादितिबाष्पगर्भमालोक्यमानोवनदेवताभिः ॥ विलोकयन्केवलपर्णशालांविलीनचेताविल
लापरामः ॥ २५ ॥ हाकष्टमत्रनहिसाकिमिदंप्रवृत्तमालोकयामिचटुलामिहपारमुद्रां ॥ मांवीक्ष्यनूनमगृहीतमृगंमुहूर्तमंतर्हितातरुषुरोषवतीव
सीता ॥ ३६ ॥ त्वदभिलषितपूर्त्यैवंचितःपंचवट्यामचरमचेरमोहंमोहभाजांमजानां ॥ तदिहसरलबुद्धेनैषरोषस्यकालःसुमुखिममदु
खंकिंसोढसीतावियोगं ॥ ३७ ॥ यद्यस्तिकौतुकमपूर्वमृगेमृगाक्षिचांद्रंहरामिहरिणंममसंनिधेहि ॥ यावन्नमुंचसिमयाहृतमेणमेनंताव
द्दधातुतववक्त्रतुलांमृगांकः ॥ ३८ ॥ सप्राणाचेज्जनकतनयाकिन्नतिष्ठेतमग्रेहिंस्रैःसत्वैर्नकिलविहतारक्तसिक्तानभूमिः ॥ गोदाव
र्याःपुलिनविहृतिंरामशून्यानकुर्याद्युक्तंनक्तंचरकवलनात्संस्थितासर्वथासा ॥ ३९ ॥ लोकांतरप्रणयिनंश्वशुरंप्रणंतुमाज्ञामकालमतिलंघ्य
यदिप्रयासि ॥ विज्ञाप्यमामपिसमाक्रयसाध्वितस्मैसौमित्रिरेवभरतेनिदधातुराज्यं ॥ ४० ॥ इत्थंविलप्यदयितांविपिनेविचिन्वन्रामोनतत्र

॥ ॥ टिप्पणं ॥ ॥ १ कंदरां २ प्रथमः

धृतिमान्नचलक्ष्मणोपि ॥ तादृग्विधामपिदशांकथयन्स्वदावाल्मीकजन्ममुनिरेवकठोरचेताः ॥ ४१ ॥ ग० ॥ तत्रप्रारभमाणप्रयाणान्प्राणानवष्टभ्यजटायुः क्रियमाणसीतान्वेषणंसलक्ष्मणंराममालक्षयन्नवोचत ॥ आयुष्मन्मांखड्गविक्षतपक्षतिंक्षितितलेनिक्षिप्याक्षिप्रतरंजहारमैथिलींरावणइति ॥ पद्यं ॥ स्वयमपिशरभंगस्वीकृतांभंगहीनांसपदिगतिमवामःसंहृतायुर्जटायुः ॥ नयनसलिलमिश्रंरामहस्तेनदत्तंदशरथदुरवापंप्रापनैवापमंभः ॥ ४२ ॥ गद्यं ॥ अथदक्षिणारण्यानींप्रस्थितेकाकुत्स्थेराक्षसीकाचिदयोमुखीनामसौमित्रिमभिभूयतदीयेनशस्त्रेणशूर्पणखासिद्धिमभजत ॥ तदनुक्रौंचारण्यसरण्याप्रयातावेतौमहर्षेस्थूलशिरसःशापात्कौणपतांप्रपन्नःपन्नगपतिभोगभीषणाभ्यांभुजाभ्यांबबंधयथार्थनामाकबंधः ॥ तदनंतरमनश्रुपात्रेषुराक्षसीनेत्रेषुसदोत्पादितवारिभ्यांतरवारिभ्यांरामलक्ष्मणयोःकबंधबाहुयुगलंकदलीलोवमिवालूयत ॥ पद्यं ॥ तदनुदनुकबंधेनादरादर्थितौतौगिरितटभुविदेहंदेहतुस्तन्यभीमं ॥

॥ ॥ टिप्पणं ॥ ॥ १ शरीरं २ छेदनं

अकथयदथ शापापायतुष्टः स रामं तपनतनयमैत्र्या मैथिलीं प्राप्नुहीति ॥ ४२ ॥ गद्यं ॥ तस्मिन्नृश्यमूकमार्गमुपदिश्य स्वर्गं गते मतंगाश्रम
वासिन्या शबर्या कृतां सपर्यां रामः परिगृह्य तदनुज्ञया मनोज्ञकूजितविहंगमृगगणविहारमनोहरं गहनपदमवगाह्य व्याकोशकुशेशयपरि
चयकषायैर्वनदेवतालतादोलानुकूलैः कूलायतनलीलापरवशवशावल्लभमदांबुचुंबिभिः शंबराराति शरधिसंदशातटसहकारशिखरवि
सरदासवासारसीकरशेखरैर्विविधलतालास्यकालास्योपदेशादेशिकायमानैः कायमानसमानाभोगलतागृहकेलिलुब्धलुब्धकपुरं
ध्रीशिथिलधम्मिल्लमल्लिकागंधमांसलैर्मल्लिकाक्षपक्षविक्षोभक्षोदीभूतपाथः पाथेयैस्तटवनपवनैरनुकंप्यमानः पंपामभजत् ॥ ॥
इति श्रीमद्विदर्भराजविरचिते चंपूरामायणे श्रीमदरण्यकांडः समाप्तः ॥ ॥ अथ किंष्किंधाकांडः ॥ ॥ प० ॥ सतां
सतां बुद्धिमिव प्रपन्नां पंपां वियोगज्वरजातकंपः ॥ विलोकयन्नलोकनिविष्टकीर्तिरार्तिं रघूणां प्रवरः प्रपेदे ॥ १ ॥ गद्यं ॥ ततस्तस्यास्तटवने

॥ ॥ टिप्पणं ॥ ॥ १ उदकं २ शंवले ३ साधूनां

नानानोकहनिवहपरिष्कृतान्तरं परिभ्रमन्नगपरम्परातन्तं कुसुमयपिंचीसमुद्रं विहारं नगोचितागंतव्यकुंचितपवनागमनागमसंगमागमवं

चितसंचारपथिकप्रपंचाभमद्चंचलचंचरीककुलकंचुकितमाधवं। माधवं। भूतिरुदजृंभत ॥ १० ॥ यत्र कौनोर्दियुक्तानां युक्तानानविसुभ्रु

वां ॥ दोलाकर्म वितन्वंति मनांसि च वधूपि च ॥ २ ॥ करतलैरुपचायमथेक्षणैररचयं चवनेषु जनेषु च ॥ सुमनसां मनसामपि याद्दिनै विरचयंति

विलोलविलोचनाः ॥ ३ ॥ गद्यं ॥ तस्मिन्न समज्ञारसमरसमयेपंपां समंतात्पर्यटन्पर्याकुलहृदयो हृदयदयितां हृदिलक्षयन्लक्ष्मण

मिदमभाषत ॥ २० ॥ आधीसिद्धौ पधिरिवाहृताकेलिकाल्वयस्यापत्नीत्रेनायजनममयेक्षत्रियाण्यवयुद्दे ॥ शिष्यादेवद्विजपितृस

माराधनेबंधुरानैौसीतासानशिशिरितमहाकाननकानजाता ॥ ४ ॥ मलयगिरिचरोयंमन्मथायोरणाज्ञामथितपथिकवर्गो मारुत

व्याजहस्ती ॥ विरचयतिमर्दायेशैत्यसौरभ्यमांद्यात्रिविधमदसमृद्धो मानसेवप्रलीलां ॥ ५ ॥ गद्यं ॥ एवं दुःसहविरहकृशानुकृशानुभावंभा

वसंधुक्षणविचक्षणलक्ष्मणवचनधार्यमाणधैर्यराघवमग्रतः स्फग्रीवोविलोक्यवालिप्रणिहितावसर्पधियास्फदूरमपमसर्प ॥

चं० रा०
३७

सतुसंमंत्र्यमंत्रिभिस्तयोराशयमवजिगमिषुरांजनेयंप्रभंजनसंजातंप्राहिणोत् ॥ प० ॥ तपनपवनयोर्यः प्रातवान्पुत्रभावंशतमखवह्न कि० का० ४
तवाणीविधयाजन्मनाच ॥ सतुदशमुखकीर्तिस्तोमसोमस्यपक्षश्चरमइवनतृमान्ग्रापरामंहनुमान् ॥ ६ ॥ ग० ॥ सएषस्वीकृतभिक्षुवेषः सवि
नयमेतावावभाषे ॥ भवंतौकतरौकांताकारौकांतारंकथमिदमवातरतां विचित्रतरजिष्णुकोदंडमंडिताववपिदिनस्यास्यमुदितत्वाद्भवंतौ
नजीमूतौजटावल्कलयुतावपिजंगमत्वाद्भवंतौनकल्पवृक्षौ तमोपहाराकलिताववपियोगपद्यभास्करसान्निध्याद्भवंतौनपुष्पवंतौ ॥ प० ॥
कुशास्तंभेऽपिसंभृतंसौरभ्यमिवभासते ॥ तपोवेषेऽपिसौंदर्यंयुवयोर्युवयोगिनोः ॥ ७ ॥ युष्मद्वार्तासुधास्वादलुब्धयोः श्रोत्रयोः सुखं ॥ स्व
यमेवगृहीतुंमेजिह्वाप्रक्रान्तवर्तते ॥ ८ ॥ ग० ॥ कश्चिदस्तिसमस्तवानरपतिः सुग्रीवइतितेनभ्रातृभयादृष्यमूकमुपाश्रितेनयुवाभ्यां
सहसख्यमिच्छताप्रेषितंहनूमदभिधानंदधानंभिक्षुरूपप्रतिच्छन्नंवानरंमममांजनेयंप्रभंजनसंजातंजानीतमिति ॥ ततस्तदीयं

॥ ॥ टिप्पण ॥ ॥ १ शिष्यत्वपुत्रत्वं च २ दिवाकरनिशाकरौ

७१५

वचनमाकर्ण्य कर्णयुगुलसुधावर्षि देवर्षिप्रतिमो दाशरथिरन्तदर्शी तेन पश्चात्तमुपाश्रित्य विरचितभुवनसौख्यं सख्यं तपनतनयेन साकम
ग्निसाक्षिकमकरोत् ॥ प० ॥ योगं वितन्वति हनूमति राघवस्य वैवस्वतेन हरिणा समवर्तिना च ॥ मैत्रं विधिं घटयितुं हरिमिंद्रपुत्रं वैवस्वतेन हरिणा
समवर्तिना च ॥ ९ ॥ ग० ॥ ततस्तत्क्षणसंभूतविस्रंभाय प्रतिश्रुतवालिवधाय कथितनिजदशाय दाशरथये सुग्रीवो दशग्रीवनीयमानसीता
पातितानि कानिचिदाभरणान्यदर्शयत् ॥ प० ॥ तस्यार्पितानां कपिपुंगवेन रामः स्वकांताधृतभूषणानां ॥ संस्कारहान्या परिधूसराणां
प्रक्षालनं बाष्पजलैश्चकार ॥ १० ॥ ग० ॥ ततः सौमित्रिभणितानिर्बंधसंधुक्षितधैर्येण रामेणानुयुक्तो वालिवैरकारणं भानुसूनुरित्थमकथ
वालिनं
यत् ॥ पुरा खलु निखिलरिपुकुलतिमिरनिचयभर्गो विमालिनं मायावी नाम दानवः कश्चन दुंदुभेर्भ्राता युद्धाय रुध्वा तद्बलचकितध्वांत
रुरगनगरकुहरमवागाहत ॥ तदनुगाहमानमानशालिना वालिना बिलमुखपालनाय निहितस्तस्योत्थानवेलां प्रतिपालयन्नहं चिर

॥ ॥ टिप्पणं ॥ ॥ १ वानरेण २ यमेन

कालेव्यतीतेफेनस्त्वानमांमानिःसृतमसृग्पूरमवेक्ष्यभ्रातामेनिहतइतिनिरचिनवं ॥ तदनुविपुलोपलपटलपिहितविलमुखःसवलीमुख
बलस्तस्मैदत्वास्वयमुदश्रुरुदकंनैवापमवापंशोकांधःकिष्किंधां ॥ अथविदितवृत्तांतैरमात्यैरभिषेचितेमयिमायाविनंनिहत्यखरतरभुज
परिघविघट्टितविलवदनापिधानस्तरसारसातलात्पुरंप्रविष्टोतीवरुष्टःप्रभ्रष्टाशयंबहुशःप्रणिपतंतंप्रतिपादितयाथातथ्यंमांनगरा
न्निरागसमपिनिरकासयत् ॥ तदनुतदनुधावनात्कांदिशीकस्यममपर्वतेस्मिन्नकुतोभयसंचारकारणमाकर्ण्यतां ॥ पुरैकदावालि
नमतुलभुजबलमखिलकुलाचलचलनचतुरंचतुरर्णवलंघनजंघालंदुंदुभिर्नामवृंदारकारिर्लुलायकायःपरिभूयसमरेसमति
ष्ठत ॥ निहतस्यतस्यशवंबाहुबलावलेपेनवालीसकललोकविलयविलोलदनिलबलचलिततलघुतूललीलयामतंगाश्रम
क्षितौक्षिप्रमक्षिपत् ॥ पद्यं ॥ तत्रवालिकरनुन्ननिष्पतद्दुंदुभिप्रसृतरक्तबिंदुभिः ॥ पाटलंतदभवन्मुनेर्वनंतस्यवक्रमपिरो
षपाटलं ॥ ११ ॥ गद्यं ॥ ततोमतंगशापबलादवालिवश्यमृश्यमूकंविमृश्यास्मिन्विस्मृतपुरनिवासस्त्वरवेकश्चिरंनिवसति

सतिमयि॥ पद्यं॥ अयममुखयदेवंदवधीमान्हनूमान्निपुगतिभवनेऽपिचन्मममनोजसंमां॥ द्रवद्दुतवहधूमस्तोमइत्यं युवाहाचकितमिव
मयूरंमारुतोवालिशीनः॥१२॥ गद्यं॥ श्रुत्वाथरामःशोकादग्रांमकप्राणिगिरं॥ यद्येवंमहाभागमामेषोर्मिमालिनीमुखएववलीमुखस्य
तस्यासून्कालक्षेपमपास्यनास्यर्तान्कृत्वातत्रप्रत्ययार्थंपादांगुष्ठेनप्रेरितदुंदुभिकलेवरस्तत्क्षणाच्चतृणस्यकपीश्वरस्यप्रार्थनयासप्त
भुवनभवनस्तंभसंभावनयाकिलसततधात्रावर्धमानपरिणाहरोहान्सप्तसालानस्थविधेन्द्रयातुधानकुलविविधवधविधाय
केनसायकेनविव्याध॥ सोयंसायकोनिकटगिरिकटकमपिपाटयामास॥ पद्यं॥ निर्भिन्नसालकटकोऽस्मियथातथात्वंपोल
स्त्यसालकटकंयुधिपाटयेति॥ ऊचेशिलादलनजातरवेणनूनंतस्मैवलीमुखवरायशिलीमुखः सः॥१३॥ गद्यं॥ ततस्तत्प्रत्या
हूतेनपुरुहूततनुजेनसार्धंतस्यनलानलियुद्धप्रवृत्तेसतिसज्जनदुर्जनयोर्भेदंरूपतोपिविवेक्तुमक्षमतयाननासिविचारयत्नरदनि

॥ ॥टिप्पणं॥ ॥ १ बालिनः

वाचंयमतामुपेतइववाग्मीतयोरप्येकवेषकर्मणाभेदमनवगच्छन्नमुक्तशरोभूद्दाशरथिः॥ सुग्रीवस्तुवालिबलाभिहननयालब्धदैन्यो
वदान्यइवमार्गणापातमार्गेसदाचक्षुर्विक्षिपन्नपगतधृतिरतिदूरमपासरत्॥ तमेनमृश्यमूकेमूकवत्त्रपयानिषण्णंविषण्णहृदयंदयालु
रालोक्यत्रैलोक्यैकधन्वीरामस्तद्भेदमवगंतुकामःकामप्यभिज्ञानमालांसुग्रीवग्रीवायांबाणनिवारणनिपुणांसिद्धौषधिमिवबध्वाभूयोपि
वालिनमाहवायाह्वयेतितमादिदेश॥ पुनरप्यवाप्यकिष्किंधांपर्जन्यइवगर्जतितस्मिन्स्तन्नामपुत्रस्ताराभिहितांहितोक्तिमतिक्रम्यदुरतिक्र
मतयानिर्यतेःसमारब्धसमरोदाशरथिशरशकलीकृतवक्षस्थलःक्षितितलंसहसापपात॥ अथविदितवृत्तांतासंततनाश्रुनिष्यंदकलुषित
ताराताराननगरान्निर्गत्यवारिवारितवारणयूथपतिमिवसुग्रीवनिर्भयानिरीक्ष्यमाणमुद्धृतग्रीवमुत्थातुमक्षमतयास्मानस्पर्शिनकूर्प
रयुगलंगलगलदसृक्पूरशरशरीरंशरासनशिखरविन्यस्तहस्तेनसन्निकर्षस्थितेनककुत्स्थेनकृतसल्लापमनंतातमग्रमियायुधि

॥ ॥टिप्पणं॥ ॥ १ दानशौंडः २ बाण याचकश्च ३ इवस्य

मस्तोन्मुखमिवमयूखमालिनंवालिनमालिंग्यस्वांकोनंसिनतदुन्नमांगारघुनाथमित्थमकथयत् ॥ प[illegible] ॥ कारुण्यंनिरवधियन्नवप्रसिद्धंशी
तांशोःसहजमिवार्तिहारिशैत्यं ॥ तत्सर्वमनुकुलनाथरम्यकीर्तिमत्पापात्कथयकथंत्वयानिरस्तं ॥ १४ ॥ एवंविधेप्रियतमेप्यनमेतजीवांमारा
क्षसीतिरघुपुंगवमाधुनुध्वा ॥ बाणंविमुंचमयिसंप्रतिनाटकारश्रेयोद्रुवंदयितसंगमकारिणस्ते ॥ १५ ॥ साधारणीक्षितिभुजांमृगय
तिपूर्वमुक्तंत्वयैववजनसंसदिसत्यवादिन् ॥ शाखामृगांतदिहमारयमांशरेणकोनामगममृगयुर्दयतेमृगाणां ॥ १६ ॥ संचरस्यपूर्वममुत
स्तवबंधुरेषभेजेयथाद्रिमकुतोभयमृश्यकूकं ॥ भर्तामममायमपिगमशरैरभेद्यंप्रापोमदीयहृदयस्थलमाद्रिदुर्गं ॥ १७ ॥ नाहंसुकेतुतन
यानचसप्तमालीवालीनचत्रिभुवनप्रथितप्रभावः ॥ तारास्मिवज्रहृदयाविशिखैरभेद्याधन्वीकथंभवसिराघवमामविध्वा ॥ १८ ॥
क्षितिपतितनयानांहंतगर्भेभ्रगाणांकिमुनिरवधिमोग्घ्यंशौर्यवज्जन्मसिद्धं ॥ ममहृदिनिरपायेवर्तमानेकथंद्रिरघुवरयदनु
चैमेतिष्ठसेचापपाणि ॥ १९ ॥ गद्यं ॥ एवंविलपंत्याहारयितानाश्रुधारायास्ताराया: परिदेवनरवैर्नाभ्यांबुकणाभ्युक्षणेरक्षाण

श्वासानिलैश्चक्रुनाश्वासइवलब्धसंज्ञो वाली। निजनंदनमिक्ष्वाकुनंदने समर्प्यांगदमंगसंगिनीं कांचनकांचनमालां शोकावनतग्रीवा यसुग्रीवायदत्वा निजभुजबलप्रशांतासुरः प्रशांतास्फरभूत् ॥ तत्रहामकलभुवनबहुमतबाहुबलानलशालभायिताहितवल्ललित गंधर्वगंधसिंधुरपंचताकरणपचाननदशमुखभुजभुजंगभोगनिरोधायाहितुंडिकायितवालवलयवालिन्विलयंकथंगतो सीतिबा ष्पाविलमुखावलीमुखास्तस्यराजाज्ञयायथाभिप्रेतंप्रेतकृत्यंसर्वेनिर्वर्तयामासुः ॥ पद्यं ॥ अभिषिक्तुस्कग्रीवेरामश्यामपयोमुचा॥ अभिषेक्तुंस्थितामेघास्तन्महींमहिषीमिव ॥ २० ॥ आर्यार्यान्वेषणाकार्याश्शारदीत्यक्तसंविदा ॥ कपींद्रेणार्थितोरामः किष्किंधावर्तनं प्रति ॥ २१ ॥ नयोग्यानगरनाप्तिरित्यक्तवतिराघवे ॥ सुग्रीवप्रार्थनाप्यासीद्दूरतप्रार्थनासमा ॥ २२ ॥ दत्तोर्जुनविकासेनधार्तराष्ट्राभि रम्यता ॥ तेनजीमूतकालेनदेवकीनंदनायितं ॥ २३ ॥ तत्र ॥ आस्माकींरूपलक्ष्मीमसकृदपहारत्यास्मकांत्यातदास्तांभर्तारंनः सुरेंद्रंकिम ४०

॥ ॥ टिप्पणं ॥ ॥ १ रक्षपार्थश्च २ हंमाः धृतराष्ट्रपुत्राश्च

पिनगणयन्नालिनंद्राग्जघान ॥ इत्थंमत्वेंववैरंझटितिघनघटाराघवस्याहवोत्थामाशामाशाश्चरुद्ध्वास्तानितमिषमहासिंहनादंततान ॥
॥२४॥ उपचितजीवनधारासत्पथभाजोनिरस्तसंतापाः ॥ भूपाइवनवमेघाःपौलस्त्यमहाबलाकुलिताः ॥ २५ ॥ ग० ॥ तेनकिलरघुपतिरतिमात्रप्रवृ
द्धमन्युःशतमन्युशरासनशारेतरतागपथांघनतरघनरवमुखरितहरिन्मुखाभोगांकदंबवनंपवनाकंपनानिराडंबरकोदंबकुटुंबामंबुदकदं
बकवलितांबरांशिलींध्रसंबंधबंधुरवसुंधरांविकचकुटजानिचयकवचितमहारण्यांप्रावृषेण्यांप्रक्रियांप्रेक्षमाणोलक्ष्मणमिदमभाषत ॥
पद्यं ॥ अयंकालःकालप्रमथनगलाभैरभिनवैरहंयूनांयूनामपहरतिधैर्यंजलधरैः ॥ स्मराधाराधारापरिचयजडावांतिसहसानभ
स्वंतःस्वंतःकथमिववियोगःपरिणमेत् ॥ २६ ॥ महामंमरस्पृचकप्रतिदिशंमनोजन्मनोमयूरगलकाहलीकल्कलःसमुज्जृंभते ॥
पयोदमलिनेदिनेपरुषविप्रयोगव्यथांनरेषुवनितास्वयादधतिहंतकेकाइति ॥ २७ ॥ अंभोदरोदरविनिर्गतवारिधारासंमर्दमांस

॥ ॥ टिप्पणं ॥ ॥ १ इच्छां २ दिशाः ३ शबलः ४ कलहंसाः ५ अहंकारवनां ६ वायवः ७ मनोभवस्य

 लसमीरसमीर्यमाणैः ॥ आमोदवीचिनिचयैः कुटजप्रसूनैराकाशमेतदवकाशविहीनमासीत् ॥ २८ ॥ घनश्यामलपत्रस्य व्यो 
 मन्यग्रोधशाखिनः ॥ प्ररोहाइवलक्ष्यंतेवारिधाराधरांगताः ॥ २९ ॥ अंभोधिपानेसलिलेनसाकमापीतमौर्वाग्निशिखाकलापं ॥
तस्तोदरावारिधरावमंतिविद्युल्लतोन्मेषमिषेणनूनं ॥ ३० ॥ गद्यं ॥ इत्थंप्रवृत्तेषुघनदिनेषुदाशरथिनाकथमपिनीतेषुतदाका
रकांतिविजितमिवशनैः शनैर्मेघमंडलंपांडुरमभूत् ॥ तस्यचापस्यव्यापारवेलायांनसन्निधातव्यमित्यंतारिक्षांतरगदंतार्हितंकि
लपाकशासनशरासनं ॥ पद्यं ॥ रघुपतिचापघोषसमयोभवितेतिभियाप्युपरतमुद्भटंघनघटाजनितंस्तनितं ॥ श्वसितमरुद्भि
रत्रविजितः किलशांतिमगात्परिचितकेतकीकुटजनीपवनः पवनः ॥ ३१ ॥ तापोपशांतिनटनात्कृतलोकहर्षावर्षानटीगगनरंगतलात्स
याता ॥ अंभोदवाद्यमचिरेणशशामसर्वंनिर्वापिताश्चसहसैवतडित्प्रदीपाः ॥ ३२ ॥ ग० ॥ क्रमेणबाहिनीजातंसकलंभाविनींवानर 
॥ ॥ टिप्पणं ॥ ॥ १ वट ः

वाहिनीपूर्तिमसहमानमिवतनिमानमभजत ॥ दुर्दिनापायेलंकायामपिराजहंसनिःशंकसंचारः संभविष्यतीतिमत्वा किलभूम्यामपिसम
जनिराजहंसनिःशंकसंचारः ॥ एवंप्रोषितायामपिप्रोषितजनशेमुषीमुपिप्रावृषि ॥ पद्यं ॥ कामक्लेशसदोषत्कभिन्नहृदयच्छिद्रप्रणाली
गलन्मैत्रीसारलघोप्रतिश्रुतगिरंनिर्वोढुमप्यक्षमे ॥ सुग्रीवेचिरसंस्थितांशमयितुंरागांधतांतादृशीं किष्किंधांद्रुतमापकोपकलुषोरामाज्ञ
यालक्ष्मणः ॥ २२ ॥ ग० ॥ तत्रसौमित्रिरतीवरुष्टः प्रविष्टइत्यंगदेनविज्ञापितोप्यनंगसंगरसंगतपरिश्रमादजातजागरः सुग्रीवस्तद्द
र्शनत्राससंकुलितसकलप्लवंगकुलकिलकिलायितेनप्रबुद्धः सचिवयोः प्लक्षप्रभावनाम्नोः प्रभावेनप्रकृतिंप्रपेदे ॥ ततस्तस्मिन्सुग्रीवेरा
घवरोषस्यकारणंनिरूपयतिसतिमुखरितहरिन्मुखोभूल्लक्ष्मणज्याघोषः ॥ प० ॥ तत्रासनंद्रुतमपास्यपतिःकपीनांतत्त्रासनम्रवदनो
घनचापघोषात् ॥ संतोषपोषमिवभूरिभजन्भुजंगः संतोषनाशपिशुनात्तरुणाभ्रघोषात् ॥ २४ ॥ ग० ॥ ततः प्रतिश्रुतकार्यस्यप्रोत्स

॥ ॥ टिप्पणं ॥ ॥ १बुद्धिः २शरः ३जलनिर्गममार्गः

हनायप्रणयकुपितेनभ्रात्रा प्रेषित एष इति मारुतिना धार्यमाणधैर्यः सुग्रीवः सौमित्रिं सांत्वयितुं तारां प्रेषितवान् ॥ प० ॥ द्राग्वारुणीभजननिन्दु
तराजतेजोनिष्क्रांततारमुपशांततमोविकारं ॥ पूर्वाशयाविशति सत्पथभाजि मित्रे सत्यं निशांतसममस्यानिशांतमासीत् ॥ ३५ ॥ ग० ॥ सा तु
रामानुजमासाद्यैवमवोचत् ॥ प० ॥ प्राचीनं व्यसनं सुरेंद्रतनयाज्जातं वने भ्राम्यतः सुग्रीवस्य निराकृतं खररिपोर्बाणेन सालच्छिदा ॥
अद्यास्य व्यसनं तु पंचविशिखादासीदुपेंद्रात्मजात्सौमित्रे तदपि प्रशांतमभवज्ज्याघोषमात्रेण ते ॥ ३६ ॥ गद्यं ॥ तदनंतरं तारासांत्वन
प्रशांतकोपेन सौमित्रिणा साकं तपनतनयः सविनयमाश्रित्य दाशरथिं प्रांजलिर्व्यजिज्ञपत् ॥ देव कपिबलमखिलमखिलकुलाचलनिलयम
निलतनयेनाहूतं पुरुहूत इव पुलोमजापहारिणं बलाभिधानमनुल्हादं रावणं रणे हनिष्यतीति ॥ ततः ॥ पद्यं ॥ ककुभि कुलिशपा
णेर्मैथिलीं तां विचेतुं विनतमथ दिशायां मारुतिं प्रेतभर्तुः ॥ वरुणदिशि सुषेणं यक्षराजांचितायां हरि तिशातबलिं च प्राहिणोद्वानरेंद्रः
॥ ३७ ॥

॥ टिप्पणं ॥ ॥ १ मदिरा पश्चिमदिशा च २ सूर्ये सुहृदि च ३ मंदिरं

गद्यं ॥ तदनु दिनेषु केषुचिद्गतेषु ॥ मासातिपातनान्नहो नियतमुदग्रदंडः सुग्रीव इति निस्त्वरमितरेषु दिगंतरप्रेषितेषु निवृत्तेषु प्लवंगबले
षु पितृपतिहरिति[1] प्रेषिता मारुतिजांबवदंगदनलनीलप्रभृतयोप्यलब्धसीतोपलब्धयस्तनयनाशकुपितकण्वशापनिःशोषितचराचर
मपरावितच्चारप्रांतारं कांतारं तीर्त्वा कांतारे कस्मिंश्चिद् दुस्करमेकं निरीक्ष्य रक्षःपतिरिति[2] रिति बुध्या युद्धाय संनद्धा बभुवुः ॥ प० ॥ निशि
चरपतिरित्यवेक्ष्य रोषादशनिनिपातनिभेन नाऽनेन ॥ अ[3]सुरहितममुं प्रहृत्य दैत्यं सुरहितमेव चकार वालिपुत्रः ॥ ३८ ॥ ग० ॥ तत
स्तारेयवचनात्तत इतो विचित्य निकटगिरिसानुशयाः सा[4]नुशयाः सलिलाशया जलचरपतंगपतनोत्पतनानुमीयमानपल्वलोपशल्यं
किमपि बिलकुहरमवगाह्य कंचन कांचनमयं मयमायानिर्मितं पिहिताशानभोभागं विहितनपोभंगायै स्वरांगनायै हेमायै द्रुहिणेन वि
तीर्णं मेरुसावर्णिदुहित्रा स्वयंप्रभया कृतावनं वनोद्देशं अविशन् । ततः कृतातिथ्यायाः स्वयंप्रभायाः प्रभावेन बिलादुत्तीर्णानां स

॥ ॥ टिप्पणं ॥ ॥ १ दक्षिणदिशि २ रावणः ३ दैत्यहितं प्राणरहितं च ४ पश्चात्तापयुक्ताः

मयातिपातेनपतिष्यतिरूग्रीवदंडइतिविक्रतिमुपेत्यसंगतमनोगदनांगदेनपवनतनयवचनप्रत्ययप्रत्ययानीनप्रकृतिनासह
प्रायोपवेशमुपेयुषांप्लवंगपुंगवानांपरिदेवनकथाप्रसंगेनजटायुषोनिधनंनिशम्यविंध्यरंध्राद्विहितसंपातः संपातिर्नाम गृध्रराज
स्तानेवमवादीत् ॥ पद्यं ॥ केयूयमक्षयबलेप्यभिधायपापंवत्सेजटायुषिममश्रवसीदहंतः ॥ तस्मात्पुराकिरणदाहितपक्षयु
ग्मंतिग्मांशुमुष्णवचसाशिशिरीकुरुध्वे ॥ ३९ ॥ गद्यं ॥ ततस्तैः प्रस्थापितवृत्तांतः संपातिः प्रोषितायुषेजटायुषेनिवापांजलिंनि
ईत्यपुराकदाचिदामिषान्वेषणायप्रेपितेननिजसुतेनसुपार्श्वनाम्नासमाम्नातंमहेंद्रमहीध्ररंध्रनिर्गतदशवदननीयमानजानकी
परिदेवनंजानानः सूक्ष्मचक्षुःपुनरेवमवोचत् ॥ अलंकातर्येणलंकाभिधानांयातुधानराजधानींअधिवसतिसीतादशवदननीतातत्र
गच्छंतुभवंतः ॥ प० ॥ किंच ॥ दिवाकरस्तोषभवांममार्तिनिशोकरोनाममुनिर्निरस्यन् ॥ जगादवः कार्यमहार्यधैर्या क्षणेनतांद्रक्ष्य
॥ ॥ टि० ॥ ॥ १रूणौ २ दाह

थराजपत्नीं ॥ ४० ॥ इति ब्रुवाणं कृतसौहृदं तं संपातिमापृच्छ्य परावरज्ञं ॥ प्ररूढहर्षाः प्रथितप्रभावाः प्रतस्थिरे वानरयूथनाथाः ॥ ४१ ॥
पर्यास्तं प्रमदमुपेयुषां कपीनां पाथानां दशमुखमार्गमार्गणाय ॥ पाथेयीकृतकपिराजशासनानां पाथोधिर्नयनपथातिथिर्बभूव ॥ ४२ ॥
कृत्वा मधुरा रिशिलीमुखानां स्मृत्वा गणस्तत्र वलीमुखानां ॥ अपामपारस्य निधेश्च पश्यन्नेवाङ्मुखो वक्तुमवाङ्मुखोभूत् ॥ ४३ ॥ ग० ॥
तदनु बानरसेनामेनामवार्यमाणकातर्यामित्थमकथयदंगदः ॥ प० ॥ किमिति भजथ मौनं वानरा मानहीनाः सगररचितकूपोल्लंघने कुंठि
ताशाः ॥ अकलंशाभवल्लेह्यं दुःशामं वाडवाग्नेरनेवधिमयशोब्धिं किं समर्थास्तरीतुं ॥ ४४ ॥ ग० ॥ ततः पारावारपारीणतायामात्मशक्तेरि
यत्तां प्रत्येकं कथयत्सु यूथपेषु निर्दिश्यांजनेयं प्रभंजनसंभवं जांबवानभिहितवान् ॥ प० ॥ हे वीरा यूथनाथाः परिणतिपुरुषः कोयमासीद्वि
षादः कस्मादस्माकमेतज्जलनिधितरणे शक्तिरेतावतीति ॥ स्मृतारागज्ञः प्रतिज्ञामयमनिलसुतो लंघनायोन्मुखश्चेदंगदः प्रादुर्भवेत्किं क

॥ ॥ टि० ॥ ॥ १ अधोमुखः २ मौनमुखः ३ अमर्यादं ४ पारगामितायां

थयतपयसामास्पदेगोप्यदेवा ॥ ४५ ॥ उदपतदुपभोक्तुंमंडलंचंद्रभानोः परिणतफलबुध्याबाल्भावेपिसोयं ॥ तदनुकुलिशपात
क्षुण्णगंडायतस्मैवरमदिशादमेयंवायुतृप्त्यैविधाता ॥ ४६ ॥ इत्थंजांबवतापरावरविदासंधुक्षितस्वाभवःकृत्वावृद्धिमुपेयुषास्ववपु
पात्रैविक्रमंप्रक्रमं ॥ आरुह्याद्रितटंयथोचितममौसंमान्यसेनाधिपानासन्नानथसंननाहतरितुंवारानिधिंमारुतिः ॥ ४७ ॥ ॥
इतिश्रीविदर्भराजविरचितेचंपुरामायणेकिष्किंधाकांडः समाप्तः ॥ ॥ अथसुंदरकांडः ॥ ॥ प० ॥ ततोहनूमान्दशकंठनी
तांसीतांविचेतुंपथिचारणानां ॥ महेंद्रशैलस्यखगेंद्रवेगः प्रस्थादुदस्थात्प्रथमानमानः ॥ १ ॥ ग० ॥ तदानीमुदन्वदुल्लंघनदृढतरनिहित
चरणनिष्पीडनंसोढुमक्षमः क्ष्माभृदेषनिःशेषनिःसरन्निर्झरौघतयानिरंतरनिष्पतद्बाष्पपूरइवइतस्ततोविततजीमूतवृंदस्यंदत
यापारिप्लवशिथिलधम्मिल्लइवसंत्रस्यमानकुंजरयूथतयासंजातभयथुरिवससाध्वसतयाधावमानहरिणीगणचरणकोटिपाद

॥ ॥ टि० ॥ ॥ १ वर्धित २ शोधितुं

नोद्भूत धातु धूलि पाटलित विकट कटकतया क्षरित शोणित इव तत्क्षण प्रबुद्ध कंठीरवकंठरव मुखरित कंदरतया कृताक्रंद इव परिसर गह्वर
निविरीसनिः सृतसरी सृपतया निर्गलितांत्र माल इव घूर्णमान तरु विटप कोटि ताडित जलद वृंदस्यंदितसीकर निकर कोरकिता कारतया
समुपजात स्वेद इव स्फुटित तटोपल पतन दलित कीचक रुषिर संमूर्छस वन फूत्कार परिपूरित गगनतया प्रवर्द्धमानोर्ध्वश्वास इव वचसाम
विषयं दौस्थ्यमभजत ॥ पद्यं ॥ कृत्वा मारुति लंघनोत्थितरैयान्नत्रानु यात्रां ततः पर्यायास ततां महेंद्र गहन क्षोणी रुहाणां ततिः ॥ मध्ये वारिनिधि
प्रकाशितशिखा सेतोः कृते भाविनः सूत्रन्यास निखात शंकु निवह भ्रांतिं पयोधौ दधौ ॥२॥ पक्षाभिघात रय रेचित वीचि मालः पाथोनिधेः पे
वन नंदन विश्रमाय ॥ उत्तुंग शृंग कुल कीलित नाकलोको मैनाक भूभृदुदजृंभत संभ्रमेण ॥३॥ तत्र यात्रा प्रत्यूहः प्रत्युद्भूत इति वक्षसा तमधः
पातयित्वा प्रयातमेनं सांत्वयन् हिरण्यनाभो बभाषे ॥ पद्यं ॥ सागरेण कृतज्ञेन तवाध्वश्रम शांतये ॥ मारुते प्रेरितोस्म्यत्र सौम्य विश्र

टिप्पणं १ सिंहः २ सर्पतया ३ वेगान् ४ अरण्यं ५ हनूमान् ६ स्पर्शितः ७ विघ्नं

म्य गम्यतां ॥४॥ तव पित्रा परित्रातः पूर्वं पर्वतभेदिनः ॥ तस्मान्नास्ति विपक्षोत्र स पक्ष इति मां भज ॥५॥ गद्यं ॥ एवं प्रार्थयमानमेनं संमान्य का-
र्यगत्यागते सति हनूमति ॥ पद्यं ॥ अवलोक्य हिरण्यनाभमब्धौ वेलमानं बलमानमाथिवज्रः ॥ शतमन्युरपेतमन्युरासीत्स्वमानात्म-
जसेवनादमुष्मिन् ॥६॥ गद्यं ॥ तदनु यथापुरं लंकापुरं प्रति धावतो हनूमतः सरणिमरुणदरुणसारथेः पदवीं विंध्य इव वदनं व्यादा-
य हि रसनजननी रंहसा क्रूरसा ॥ पद्यं ॥ उज्जृंभितस्य तरसास्फुरसां विजेतुं पादौ पयोधिकलितौ पवमानसूनोः ॥ तस्योत्तमांगमभवद्गगन-
स्रवंतीवीचीचयस्खलितसीकरमालभारि ॥७॥ तनुं तनूकृत्य तदा हनूमान् कृत्वावगाहं जठरे तदीये ॥ ततो विनिष्क्रम्य स चक्रपाणेस्त्रि-
विक्रमस्य क्रममेव चक्रे ॥८॥ भूयोपि सोयं रघुनाथदूतश्चिच्छेद गच्छन्नखरैः खराग्रैः ॥ नृसिंहरंहाः पथि सिंहिकांगं छायानिरोधादुप-
पन्नमन्युः ॥९॥ ग० ॥ तदनु पारावारस्य पारे लंबमानशिखरिणि लंबमाने तनु लंकापुरद्वारमासाद्य नितांतचिंतातंतुसंदानितांतः

टिप्पणं १ इंद्रान् २ चंचलं ३ सूर्यस्य ४ विष्णोः ५ तीक्ष्णाग्रैः

करणोभूत्॥ वानरसेना कथं तरेदिममंतरायं वितन्वंतमुदन्वंतं तरतु नाम॥ कथमुपयातु यातुधानराजधानीमिमां सर्वथा वितथमनोरथो दाश
रथिर्मोघीकृतार्णवलंघनः केवलमहमभवं जीवति वा न वेति न जानामि जानकीमिति॥ ततस्तत्रभवतीं सीतामवजिगमिषुरांजनेयः प्रच्छन्न
संचारहेतोरस्तमयं गभस्तिमालिनः केवलमभिललाष॥ तदनु शांतमरवस्य निक्षेपचापस्य प्रत्यासीदति प्रयोजनवेलेति प्रचेतसे[1] कथयि
तुमिव प्रतीचीं दिशं प्रविशति भगवति भास्वति गगनतलमिदमपरमहीधरकटककांतारसमुद्भवदावपावकशिखाश्रेणिभिः किमिह शो
णितं अथवा समीपसमापतत्पतंगरश्मिदृढतरवेष्टननिष्ठ्यूतानलतटतपनोपलजालसमुल्लसज्ज्वालापटलैः किमापाटलं आहोस्विदागता
यमित्राय महार्घ[2]मर्घ्यं प्रदातुं प्रमुदितचेतसा प्रचेतसा तूर्णमर्णवोद्धार्यमाणमाणिक्यकिरणैः किमरुणितं आहोस्वित्तारापथतरंगिणीस
लिलमपि ग्रसितुमुज्जृंभितस्य चरमसागरोर्वाग्नेः रश्मिपुंजेन किमिह रंजितमिति सकलजनस्य संदेहसंदोहं संदधाने संध्यारागे समुदंचिते

टिप्पणं १वरुणाय २ महामौल्यं

सरसीरुहश्रेणिषु पत्रपुटकपाटपिधानात्प्रतिकुमुदवनं मकरंदभिक्षामटत्सु मधुव्रतद्विजेषु विकचकुवलयकलिकाकषणकषायेषु मायंवायुषु ततइतः संचरत्सु तिमिरेषु कालागरुधूमस्तोमश्यामलितेषु दिक्पालपुरगोपुरव्यूहेषु प्रतिकमलाकरं प्रेंखित विश्लेषवेदनापूर्वरंगे रथांगविहंगानां दीनक्रेंकारे नक्षत्रमालालंकृते गगनमतंगजे ॥ पद्यं ॥ आविर्बभूव पूर्वाद्रेः शृंगे शृंगारजीवितं ॥ तमस्तमालकांतारकुठारः शशलांछनः ॥१०॥ तेत्करास्तमसा रुद्धा रेजिरे गगनाजिरे ॥ शैवालनयसंछन्नाः सरसीव बिसांकुराः ॥११॥ तस्मिन्प्रदोषसमये सहसा हनूमान्कीर्तिच्छटाजवनिकामपनीय शत्रोः ॥ आविर्बभूव स्वमनः परितोषणाय लंकाप्रवेशनवनाटकसूत्रधारः ॥१२॥ गद्यं ॥ तत्काले लंकाधिदेवता मात्मना सह विग्रहं विधातुं गृहीत युवतिविग्रहां मार्गे स्यार्गली भूय भूयसा तर्जयंतीं निर्जित्य तया वानररचितावज्ञोपज्ञं निजाविलयं सरसिजासनशासनादावेदयंत्या विहितानुमति र्मारुतिर्लंकायामविकलमेव मैथिलीं विचिन्वन्नैर्ॠतिचक्र

टिप्पणं १ भ्रमराः २ कमलं ३ किरणाः ४ पंडिताः देवताश्च

वर्तिनः प्रासादमाससाद ॥ तत्र ॥ पद्यं ॥ एषा राक्षससार्वभौमनगरी रक्षश्चमूरक्षिता तस्येदं सदनं विमानशिखरैर्बिभ्राणमभ्रावलिं ॥ एतत्पुष्पकमाहृतं धनपतेरित्यादरान्मारुतेस्तत्रादर्शयदिंदुदीपकिरणप्रद्योतिताशा निशा ॥१३॥ अपि च ॥ आदित्यः कृतकृत्य एष भविता सीतापतेरीदृशं साहाय्यं विरचय्य कीर्तिममितामादित्मना सूनुना ॥ इत्यालोच्य तदा किल स्वयमपि ख्यातिं गृहीतुं परां लंकायां रघुनाथदूतसरणौ चंद्रेण दीपायितं ॥ १४ ॥ गद्यं ॥ एवमेव पर्यटन्नस्वप्रकंदरी सौंदर्यमुद्रां निद्रयाप्यतिशय्य शय्यागृहे कृतसंवेशां वेशायुवती परिहृतमवरोधवधूजनमप्यनिरोधेन निरीक्ष्य तत्र वितथमनोरथो मारुतिर्विरचितबहुविधचिंताप्रकारः प्रासादादवप्लुतः सन्नशोकवनिकायामपि मैथिलीमन्वेष्टुमभीष्टदेवताप्रणाममतनुत ॥ पद्यं ॥ असौ जनकनंदिनीं ततइतो विचिन्वन्क्षणादशोकवनिकामगादपगतान्यमार्गश्रमः ॥ परामभिलषनातिंशमधनो यथा निर्ममस्त्रयी[1]मखिलकिल्बिषप्रशमनैकदिव्यौषधिं ॥१५॥ ग० ॥ ततस्तस्यां

टिप्पणं १ वेदत्रयी

नाग पुन्नाग ताल हिंताल तमाल हृत मालसरल बकुल तिलकामलक कुटज लिकुच केतक कंकोल लवंग विकंकत कदंब कोदुंबर कपित्थाश्वत्थ कुरबक मरुबक कुंद तिंदुक चंदन स्यंदन चंपक चांपेय पनस वेतस पलाश पाटला प्रियाल प्रायै रनेकै रनोकह निवहैः परिवृतां परिभ्रमन्नाभ्रंकष विटप निविडित गगन प्रपंचां कांचन कांचनमयीं शिंशपामारुरोह ॥ पद्यं ॥ तत्र तत्पत्रसंछन्न गात्रः पुत्रो नभस्वतः ॥ न्यग्रोध दल संलीन जनार्दन दशां दधौ ॥ १६ ॥ मल्लींचूत वनादिवस्तुहि वनेम्लेंछेन संस्थापितां मालां देवकुला दिवा मिष धिया क्षिप्तां श्मशाने शुना ॥ देवी माश्रम तस्तथास्तम वनं नक्तं चरेण च्छलादानीतामपनीत वेष रचनामालोकयन्मारुतिः ॥ १७ ॥ ग० ॥ पुनरयमेवं चिंतां ततान ॥ प० ॥ एनां विना रघुपतिः परिगृह्य धैर्यं समाण एव वसतीति विचित्रमेतत् ॥ ज्योत्स्नां विनापि निवसेन्निशि शीतभानुश्छायां विनापि निवसेद्दिवसेध्वरोपि ॥ १८ ॥ गद्यं ॥ एवं चिंतयता हनूमता नीते निशीथसमये निशीथिनीनाथे चरमगिरि शिखरोपकंठसेवासमुत्कंठमाने दशकंठस्तु निद्राशेषेण स्मरप्रहारेण च कलुषीकृताक्षः स्मर

टिप्पणं १वायोः २देवालयात्

सहरिचंदनचर्चया जानकीदर्शनेच्छया च प्रकटितरागः वैकक्षमालया मुकुटतटरत्नप्रभया च तिरस्कृतनक्षत्रमालः शनैः शनैरविशदशोकव
निकां ॥ पद्यं ॥ रजनिचरमभागे वारसीमंतिनीनां करतलकलिताभिर्दीपिकामार्जनीभिः ॥ दिशि दिशि परिमृष्टं यत्तमस्तत्समस्तं हृदयमव
जगाहे केवलं रावणस्य ॥ १९ ॥ सोयं मदांधहृदयो रघुवीरपत्नीं सीमंतिनीतिहननीतिरवापपापः ॥ आमूलपल्लवितकोमलसल्लकीतिवैतान
पावकशिखामिव वारणेंद्रः ॥ २० ॥ गद्यं ॥ एतद्दर्शनवेपमानतनुलता मैथिली कापुरुषविषयपरुषवचनपारंपर्येण विदीर्यमाणहृदया
हृदयदयितशौर्यप्रत्ययादमुमेव तृणाय मत्वा तृणमंतरतः कृत्वा स्थिता पर्यभाषत ॥ अयि भोः सकलसमाचारप्रतिष्ठानिष्ठः परमेष्ठी
ननु कुलगुरुर्भवतः परकलत्रगात्रनेत्रप्रसक्तिरप्यनिरपत्रपां जनयति गोत्रजातानां भूयोपि पंचवटीपरिसरमभुंजनं प्रभंजन इवानुकू
लः कूलोपकंठपरिभ्रष्टां नावमिव यदि नयेथाः ॥ तथापि दयते नियतं मदीयो जीवितेशः साक्षाज्जीवितेशोपि त्वयि दयालुर्भवेद्दाशर

॥ टिप्पणं ॥ १ निरस्तं २ नविवेश ३ नारी ४ स्ववंशजातानां ५ प्राणेशः ६ यमः

 थेरूजेयप्यमैथ्याःपात्रमपिभवितासि॥ किंतु॥ खरप्रमुखनिशाचरबलमथनमनयस्कविरलप्रसांद्रवमापंकपंकिलमुखमार्यपुत्रस्यशिली 
 मुखंभयंतमंतरेणकः श्रद्दधीतनिजहृदयगलितरुधिरधारयाप्रक्षालयितुंअथवाजनस्थानसमरादारभ्यसमराभावांचंग्रहतृषि
तानांसौमित्रिपत्रिवातकानांत्वदंगगलितशोणितांबुपारणांतवापनयघनतश्चेत्कःसमर्थो निवारयितुं॥ पद्यं॥ अथनिशिचरना
थंपंचबाणावभिन्नंनहिजनकसुतायाःप्रापदेकापिवार्णा॥ जनमुपनतमृत्युंपंचवक्त्राहिदष्टविशतिहृतविषाधेरोषधेःकिंनुशक्तिः
॥२१॥ गद्यं॥ एवंजनकदुहितुरवधीरणाफणितिमाकर्ण्यकोपपराङ्मुखोदशमुखस्तामभितोनिवसंतीरारक्षिकाराक्षसीराहूयभ
वत्यश्चतुर्भिरप्युपायैरेनांममावश्यंवश्यांकुरुध्वमियमननुकूलाचेदिमांहताशांप्रातराशायमहानसंनयंतन्यादिश्यनिशांतेप्र
त्यासन्ने निशांतमेवविवेशतदनुभीषणवीक्षणक्षणदाचरीणांवास्यदोषोन्मेषणान्मुकुलितहृदयपुंडरीकापुंडरीकयूथपरिवृ
॥ टिप्पणं १ अवर्षणं 

तसारंगांगनाभंगीमंगीकुर्वाणा गीर्वाणतरुणीवशापवल्लाद्दृक्कंधरां प्रपन्ना जनकनंदिनी चिंतामेवमकरोत्॥ पद्यं॥ नूनं विदितवृत्तांते जटा
युषि गतायुषि॥ मामिहावस्थितामार्यपुत्रः किन्नावबुद्ध्यते॥२२॥ आहोस्वित्क्रव्यादमायया विपर्यस्तप्रकृतेः काकुत्स्थस्य किमुतास्था
संजायते॥ अथवा॥ पद्यं॥ न केवलं मामहरद्दुरात्मा रूपांचरामस्य निसर्गसिद्धां॥ इदं नचेत्संश्रितवत्सलः किं भवेत्स तूष्णीं जगदेकवीरः॥२३॥
ग०॥ इत्थं विलप्य रघुपुंगवं चिंतयंती कृच्छ्रान्मूर्च्छामगमत्॥ प०॥ निशाचरीस्तां निरवद्यशीलां निर्भर्त्सयंतीर्निभृतं विवार्य॥ अस्वप्नलोकात्स
व मात्मदृष्टं दुःस्वप्नमेकं त्रिजटा जगाद॥२४॥ किंच॥ [3]उपघ्नवृक्षस्य पतंगभावादुपेत्य पृथ्वीं सुचिरं लुठंत्याः॥ नक्तंचरस्त्रीमुख्यकर्शितायाः
सीतालतायास्त्रिजटा जटाभूत्॥२५॥ ग०॥ तदनंतरमात्मत्यागाय स्पृहयंत्यां मैथिल्यां मारुतिरियमनुक्षेपणीया नवस्विर्नानीति म
मुंचंतीति चिंतापरिगृह्य नेदीयानस्या बभूव॥ ततः॥ प०॥ देव्या दशाननवचोमयवज्रदीर्णकर्णांतरव्रणविरोपणभेषजानि॥ [4]विस्रंभणा-

॥टिप्पणं॥ १ देवांगना २ आश्रयतरोः ३ अंतिकस्थः ४ विश्वासार्थं

र्थमयमन्वयसंगतानि रामाभिकीर्तनमधूनि दशनैर्न्यषिंचत् ॥ २६ ॥ ग० तदनंतरं समंतात्प्रसारितनयना जनकतनया तस्यां शाखायां शाखामृग
मुद्वीक्ष्य चकितहृदया दुःस्वप्नबुध्या सलक्ष्मणाय भर्त्रे भद्रमाशंसमाना जनमिमं दुरापस्वापं स्वप्नः कथमाप्नुयादिति विचिंतयमाना मायास-
मायातनैर्ऋतपतिबुध्या तस्मान्मारुतपुत्रात्तत्रास ॥ सोपि समवतीर्य वचनवैचित्र्या जनकपुत्रीं प्रत्याययन्नांजनेयः कृतांजलिर्व्यजि-
ज्ञपत् ॥ प० ॥ कल्याणि नीव्रवेगेन त्वद्वियोगेन ताम्यतः ॥ राघवेंद्रस्य दूतं मामन्यथा मा स्म मन्यथाः ॥ २७ ॥ त्वया सह प्रस्थिता चित्तवृत्ति
र्विभावरीकोकसमानधर्मा ॥ वचोब्रवीन्मैथिलि मन्मुखेन त्वां कौशलं कोसलराजपुत्रः ॥ २८ ॥ अपि च ॥ शिरसा तव सौमित्रिरकरोदभि
वादनं ॥ अपृच्छत्सोपि भद्रं त्वामधिपश्च वनौकसां ॥ २९ ॥ ग० ॥ एवमभिहितया तया संभूतविस्रंभया भयानपेतया तावदनुयुक्तः पवनतन
यो वालिमरणकारणं सुग्रीवसख्यमाख्याय प्राचेतसचेतइव संततसंन्निहितरामनामकमंगुलीयकमस्यै प्रायच्छत् ॥ प० ॥ सौख्याय

॥ टिप्पणं ॥ १ वाल्मीकिचित्तमिव

हस्य पवनात्मजदीयमानरामांगुलीयकविलोकनवासरस्य॥ सत्यं कलाशाततमीमपि नैव भेजे पाणिग्रहोत्सवदिनं जनकात्मजायाः॥ ३०॥ ग०॥ ततस्तं जानकी निःसीमहर्षा बभाषे॥ महाभाग संधत्स्व दुरात्मनः प्रत्यासीदति मृत्युस्तथैव मनन्ताभिधानया विभीषणदुहित्रा मह्यं च स्वमात्रा प्रेषितया भाषितं॥ अयमप्यनार्यशीलस्तु रीपमुपायमंतरेण ममार्यपुत्रस्य न समर्पयिष्यति॥ नियतमहमपि मासादूर्ध्वं न शक्नुयां प्राणान्धारयितुमिति॥ एतदाकर्ण्य मारुतिर्महानुभावे मा भैषीः भवंतीं वहन्नेव तूर्णमुल्लंघितसागरो राघवचरणसरसिजमुपयास्यामीत्येवं मां समर्थं समर्थयेथा इत्यभिधाय॥ प०॥ महामहीध्रसध्रीचीं मोपं वृद्धिमुपेयिवान्॥ ययानूनमपां राशिः कुल्या तुल्यां विशेदृशां॥ ३१॥ अथ तमुवाच सा जनकराजसुता मुदिता किमुत वदुष्करं चरणलंघितवारिनिधेः॥ अपितु मया सह प्लवंगपुंगव यास्यसि चेदियमनपायिनी शरणमेद्भवतः पदवी॥ ३२॥ अन्यच्च पातिव्रत्यहुताशनेन यदितं कुर्यामहं भस्मसात्सत्यं दाशरथेः शरस्य न भवेदात्मा चिना पारणा॥ किं चैतस्य यशोनिशापतिरपि प्रम्लानकां

॥ टिप्पणं॥ १ महापर्वतसदृशीं

तिर्भवेत्तस्माच्छासितरावणे रघुपतौ यात्रा मम श्रेयसे॥ ३३॥ ग०॥ एवं व्याहृतः पवनसुतः सीतां पुनरभाषत॥ प०॥ मायामृगेण तव मैथिलि वंचिता
यः शाखामृगेण पुनरागतिरित्ययुक्तं॥ एषा कथापि भुवने विदिता यदिस्यात्का नाम राम धनुषः प्रथिता प्रशस्तिः॥ ३४॥ किं बहुना॥ ग०॥ तदेव चिंति
तं यदहं राघवगृहिण्यास्तदेव निश्चितं यत्सदृशामीदृशास्य समाचारस्य तदेव प्रकाशितं यदनुगुणं रावणापराधप्रतिक्रियायास्तदेवानुमोदितं यद
नुकूलं कुलवधूशीलस्य तदेव कथितं यदुचितं क्षत्रियाणीवाणीक्रमस्येति बहुशः प्रेशास्य सर्वथा रामलक्ष्मणौ लंकामिमां प्राप्ताविति जानकी
जानीहि जनमिमम नु जानीहि प्रस्थातुं॥ किंच॥ काकुत्स्थेन विदितपूर्वं किमप्यभिज्ञानं दीयतामिति॥ सा तु दीर्घं निश्वस्य निश्चित्य पुरा खलु
चित्रकूटतटवने तरुणतरतरुरमणीयतयामंदीकृतनंदनवैभवे रघुनंदनोपधानीकृतोत्संगायाः मम पयोधरपरिसरे खरतरनखराग्रविर-
चितविदारणं धाराधरनामानं काकं रघुपतिरवालोकयत्॥ कुशारूपकुशेशयासनास्त्रं विजहौ वासविवायसे स वीरः॥ अथ तत्कृपया हृतास्त्रिमात्र
॥ टिप्पणं॥ १ संस्तुत्य २ स्तननिकटे ३ ब्रह्मास्त्रं

श्चिरजीवी सदधो यथार्थसंज्ञां॥ ३५॥ ग०॥ सेषापरिचितकथास्मरणाद्विगुणदुर्दशाकेशपिनद्धमपरमिदमभिज्ञानमुन्मुच्य॥ प०॥ चूडामणिं कपि
वरस्य ददौ दशास्यसंत्रासपूजितमहाग्निशिखं कृशांगी॥ आदाय तं प्रणतिपूर्वमसौ प्रतस्थे माणिक्यगर्भवदनोरगतुल्यबाहुः॥ ३६॥ ग०॥ ततः
कृतकृत्य एव विनिर्गत्य निजागमनं निशाचरपतेः प्रकटयितुमशोकवनिकां प्रबभंज प्रभंजनात्मजः॥ प०॥ स्वकृत्यैः शाखानामवनतिमतीव
प्रकटयन्मार्गेण भ्राम्यन्परिकलितभंगः सुमनसां॥ द्विजानां संत्रासं श्रुतिमधुरवाचां विरचयन्नयं लंकोद्याने दशवदनलीलामतनुत॥ ३७॥
ग०॥ तदनु सरभसमारक्षिकरक्षोगणनिवेदितप्रमदवनकदनकुपितदशवदनप्रेषितान्नितृपतिकिंकरभयंकरान्प्रहस्तपुत्रेण जबूमालि
ना सह निहत्य चैत्यतोरणमुपागतवति हनूमति पुनरपि निशामितामितनिशिचरगणमारणो रावणः सचिवान्पंच पंचाननपराक्रमान्प्रह-
स्तप्रमुखान्वलीमुखं जीवग्राहं गृण्हीध्वमिति प्राहिणोत्॥ तत्र तानपि पंचतां नीत्वा तोरणपरिघेण मुहुर्मुहुर्दाशरथिदासोहमित्यात्मानमुद्घा-

॥ टिप्पणं॥ १ शिरोरत्नं २ वायुपुत्रः ३ वेदशाखानां तरुस्कंधानां च ४ देवानां पुष्पाणां च ५ महीसुराणां पक्षिणां च

षयंतं हनूमंतं नियंतुं निखिलरक्षसामध्यक्षमक्षकुमारमाक्षिपत्॥प०॥ वक्षःसंघट्टचूर्णीकृतकनकमहाभित्तिनिर्वेल्योत्थधूल्यानक्षत्राणामकालेस
रणिमरुणयन्वीरलक्ष्म्या समेतः॥ रक्षःशूरास्यशागन्क्षितितलफलके क्षेपणीयान्हनूमानक्षैःक्रीडां विधातुं दशमुखनगरीचत्वरे तत्वरे सो
॥३८॥ गद्यं॥ तत्क्षणं क्षणदाचरणामनिमिषितामेव निष्पादिततदंगनिष्पेषकृत्यश्चैत्यप्रासादमुत्पाटितस्तंभजातं जातवेदमादग्ध्वा भू-
योप्युपाधि ततो रणः समीरणसुतो बभूव॥ एनमपि वृत्तांतं श्रुत्वा कुपितस्य पिशिताशनपतेर्युगपदेव निपेतुः पुत्रे स्कैत्रामजितिममिति हे-
तो विंशतिदृष्टयः॥प०॥ अनिमिषभुवने वा व्योम्नि वा भूतले वा समरमुपगतं त्वां वीक्षितुं कः समर्थः॥ इति नुतिवचनेन श्लाघयन्मेघनादं
प्लवगमिहनयेति प्राहिणोद्राक्षसेंद्रः॥ ३९॥ नेतुं शोकरसं निशाचरपतेर्हंतुं चमूं रक्षसां तस्यांतःपुरयोषितां रचयितुं मानं विना रोदनं॥
सूर्याचंद्रमसोः प्रवेशविकलां लंकापुरीमग्निनाशक्रादिं कर्तुममुष्य वासवजिता जातो रणस्तोरणे॥ ४०॥ संग्रामदुर्दिने तस्मिन्जहर्षशरवर्षिणि

॥टिप्पणं॥ १रावणकृतः पाशांश्च २रावणस्य ३इंद्रजिति ४स्तुतिवाक्येन

बर्हीव मेघनादेन मेघनादेन मारुतिः ॥४१॥ ग०॥ तदनु यातुधानप्रबलप्रधाननिधनक्रुद्धो विविधायुधवैतथ्यं विमृश्य विजयश्रीसगंधं गंधवाहनंदनं चतुराननास्त्रेण बबंध दशकंधरात्मजः॥ तेन दिव्यास्त्रेण विवशशरीरमेनं पिशिताशनाः शोणवल्कलैर्बबंधुः॥ प०॥ समारुतेर्नैर्ऋतपाशजन्मा बंधीभवद्बंधनमोक्षहेतुः॥ पुरा पुलस्त्यान्वयपांसुलेन बंदीकृतानां सुरसुंदरीणां॥४२॥ ग०॥ तदनंतरमितरहननासहतया निजाद्भुतस्य दिव्यास्त्रस्य प्रभावं विभावयन्विभावरीचरपतितनूजः पवनतनयं निजपितृसमीपमुपनिनाय॥ प०॥ सो यं ददर्श दशकंधरमंधकारिशैलादितोलनपरीक्षितबाहुशौर्यं॥ बंदीकृतेंद्रपुरवारवधूकराग्रव्याधूतचामरमरुच्चलितोत्तरीयं॥४३॥ आपाटलाधरपुटांतविराजमानदंष्ट्रामहः प्रसरशारशरीरकांतिं॥ संध्यांबुदांतरितमध्यसुधामयूखरेखाभिराममिव वासवनीलशैलं॥४४॥ संग्रामकेलिपरिघट्टनभग्नभग्नदिग्दंतिदंतकृतमुद्रभुजांतरालं॥ छायात्मना प्रतितरंगविराजमानशीतांशुमंडलसनाथमिवांबुराशिं॥४५॥ निःश्रेयसः सरणिनीं प्रवणां निरोद्धुं त्रैलोक्यपापपरि-

॥टिप्पणी॥ १ इंद्रजिता घनशब्देन च २ शिवः ३ तेजः ४ प्रतिबिंबेन

पाकमिवात्तरूपं॥ सूर्येंदुपावकमहांसि तपोबलेन जित्वा यथेष्टमभिषिक्तमिवांधकारं॥५६॥ सोपि प्लवंगममवेक्ष्य समीरपुत्रं निर्वीयमाणहृदयः
पिशिताशनेंद्रः॥ कैलासशैलचलनागसिशापदायी नंदीश्वरः स्वयमुपागत इत्यमंस्त॥५७॥ ग०॥ ततः प्रहस्तेन विहितविविधानुयोगः प्रत्य-
भाषत रावणं मारुतिः॥ अयमहमह्नामधिपतिकुलतिलकस्य सत्यसंधस्य पितृनियोगसमुपनतवनवासनिरतस्य शूर्पकारातिबाधितशूर्
पणखासामवैरूप्यस्य कुप्यत्खरप्रमुखनिशीचरबलपलालजालकल्पानलकल्पशिलीमुखस्य कपटहरिणहननसमयसमुषितदारान्वेषणसं
जातसुग्रीवसख्यसमुत्खातवालिकंटकस्य दुर्वृत्तक्षत्रवंशवनपवनसारथेस्तपोनिधेर्जामदग्न्यस्य भुजबलावलेपलोपहेतोः श्रीमतो दाशर-
थेर्दूतो हं सीतामार्गमार्गणाय दिशि दिशि तपनतनयप्रेषितानां वानराणां एकतमः समुद्रलंघनजंघालस्तव नगरप्रमदावनसीम्नि रघुवरधर्म
दाराम्प्रणम्य प्रतिष्ठास्कर्मदीयमागमनं प्रकाशयितुं मथिताशोकवनिकानोकहनिवहस्त्वद्दर्शनकुतूहलेन केवलम्म्नुभूतनैर्ऋतलूतातंतुसन्नहनस्त

॥ टिप्पणं॥ १ इच्छा २ वेगवान् ३ ऊर्णनाभतंतुबंधनं

वपरिसरमुपासरं॥ ५०॥ आनाकलोकपरिकीर्तितसच्चरित्रमत्रोपरुध्य रघुवंशपतेः कलत्रं॥ वैतानवेदिजनितं परमानबंधुं वस्त्रेण बद्धमविनीत
कथंयतेथाः॥ ४७॥ प्रेंरवंती पिशिताशयारणमुग्वेमोमित्रिपत्रिक्षितंत्वद्गात्रंपरिनः पतत्रिपरिषच्छत्रच्छविंमोगमत्॥ द्राक्पौलस्त्य पुलस्त्यवंश
विलयेसंभावितेत्वत्कृते कांतानांनयनांतवांतसलिलंमाभूम्निवापोदकं॥४८॥ बद्धादरोपिपरदारपरिग्रहेत्वमिक्ष्वाकुनायककलत्रमनार्यमागाः॥ वा
ताशनोहमिति किं विनतासुतस्यश्वासानिलाय भुजगःस्पृहयालु तालुः॥ ४९॥ बाहुचंदननिषंगकोटराभिर्गतोरघुपतेः शरोरगः॥ प्राणवायुमवि
नीततावकं कालयापनमपास्यपास्यति॥ ५०॥ किंबहुना॥ मायामृगेसमरनाटकसूत्रधारे शाखामृगेचभवतः प्रतिकूलघाते॥ दृष्टोघमस्यरघु-
नायकसायकस्यमुक्त्वाप्रणामकवचंकवचंकिमन्यत्॥५१॥ एतन्निशम्य कुपितः पिशिताशनेंद्रःप्राणानमुष्यहरतेतिभटानवादीत्॥ आजन्मसि
द्धमतिरत्रविभीषणस्तंदूतोनवध्य इतिशास्त्रगिरारुरोध॥५२॥ग०॥रावणोपिविभीषणाभाषणमंगीकृत्यप्लवंगमानामंगेषुलांगूलमेववरं॥ त-

॥ टिप्पणं॥ १ अग्निं २ गलितं

पाकमिवात्तरूपं॥ सूर्येंदुपावकमहांसि तपोबलेन जित्वा यथेष्टमभिषिक्तमिवांधकारं॥ ५६॥ सोपि प्लवंगममवेक्ष्य समीरपुत्रं विक्रीयमाणहृदयः पिशिताशनेंद्रः॥ कैलासशैलचलनागसिशापदायी नंदीश्वरः स्वयमुपागत इत्यमंस्त॥ ५७॥ ग०॥ ततः प्रहस्तेन विहितविविधानुयोगः प्रत्यभाषत रावणं मारुतिः॥ अयमहमह्नामधिपतिकुलतिलकस्य सत्यसंधस्य पितृनियोगसमुपनतवनवासनिरतस्य शूर्पकारातिबाधितशूर्पणखामानवैरूप्यस्य कुप्यत्खरप्रमुखनिशिचरबलपलालजालकल्पानलकल्पशिलीमुखस्य कपटहरिणहननसमयसमुषितदारान्वेषणसंजातसुग्रीवसख्यस्य समुत्खातवालिकंटकस्य दुर्वृत्तक्षत्रवंशवनपवनसारथेस्तपोनिधेर्जामदग्न्यस्य भुजबलावलेपलोपहेतोः श्रीमतो दाशरथेर्दूतोहं सीतामार्गमार्गणाय दिशि दिशि तपनतनयप्रेषितानां वानराणां एकतमः समुद्रलंघनजंघालस्तव नगरप्रमदावनसीम्नि रघुवरधर्मदारान्प्रणम्य प्रतिष्ठास्नु मदीयमागमनं प्रकाशयितुं मथिताशोकवनिकानोकहनिवहस्त्वद्दर्शनकुतूहलेन केवलमनुभूतनैर्ऋतलूतातंतुसन्नहनस्त

॥ टिप्पणं॥ १ इच्छा २ वेगवान् ३ ऊर्णनाभतंतुबंधनं

वपरिसरमुपासरं ॥ ४६॥ आनाकलोकपरिकीर्तितसच्चरित्रमत्रोपरुध्य रघुवंशपतेः कलत्रं ॥ वैतानवेदिजनितं पवमानबंधुं वस्त्रेण बद्धमविनीत
कथं यतेथाः ॥ ४७॥ प्रेंखंती पिशिताशयारणमुखे सौमित्रिपत्रिक्षतं त्वद्गात्रं परितः पतत्रिपरिषच्छत्रच्छविं मागमत् ॥ द्राक् पौलस्त्य पुलस्त्यवंशा
विलये संभावितेत्वत्कृते कांतानां नयनांतवांतसलिलं माभून्निवापोदकं ॥ ४८॥ बद्धादरोऽपि परदारपरिग्रहे त्वमिक्ष्वाकुनायककलत्रमनार्य मागाः ॥ वा
ताशनोऽहमिति किं विनतासुतस्य श्वासानिलाय भुजगः स्पृहयालुतालुः ॥ ४९॥ बाहुचंदननिषंगकोटराभिर्गतो रघुपतेः शरोरगः ॥ प्राणवायुमवि
नीततावकं कालयापनमपास्य पास्यति ॥ ५०॥ किंबहुना ॥ मायामृगे समरनाटकसूत्रधारे शाखामृगे च भवतः प्रतिकूलयाते ॥ दृष्टोदयमस्य रघु-
नायकसायकस्य मुक्त्वा प्रणामकवचं कवचं किमन्यत् ॥ ५१॥ एतन्निशम्य कुपितः पिशिताशनेंद्रः प्राणानमुष्य हरतेति भटानवादीत् ॥ आजन्मसि
द्धमतिरत्र विभीषणस्तं दूतो न वध्य इति शास्त्रगिरा रुरोध ॥ ५२॥ ग० ॥ रावणोऽपि विभीषणभाषणमंगीकृत्य प्लवंगमानामंगेषु लांगूलमेव वरं ॥ त-

॥ टिप्पणं ॥ १ अग्निं २ गलितं

देवकार्पाससमासंवीतं वीतिहोत्रसात्कृत्य त्वरे त्वरे दोषानुद्घोष्य सहारं नगरं परितः संचारयतेति रक्षसानादिदेश॥ तेषु तथा कुर्वाणेषु॥
प०॥ निर्णयाविषयमस्य वालतः कर्णिकारनिकुरंबकर्बुरः॥ निर्निमेषगणभाग्यसंचयादुन्मिमेष भगवाननूर्बुधः॥ ५३॥ ग०॥ एतद्वृत्तां
तमारक्षिकराक्षसीगणेन गर्वोदीर्णं वर्णितमाकर्ण्य दूयमानमानसा जानकी हुताशनमुपस्थाय तदनुमतः शीतो भवेति प्रांजलिः प्रार्थयत्॥ प०॥ घो
रस्य राघवकलत्रतपोमयाग्नेर्माभूवमिंधनमहं क्षणमित्यचिन्त्य॥ शैत्यं वितत्य दहनः पवमानसूनोर्वालाग्रसीम्नि मणिदीप इवावतस्थे॥ ५४॥
ग०॥ तदनु पवनतनयोऽपि पुरमिदं तस्वलुस्फव्यक्तं नक्तमालोकयं॥ तस्मादनलसाक्षिकमेव पुरमखिलमालोकयामीति यामिनीचरगणं
परिचिततोरणपरिघेन जघान॥ प०॥ सीताभिधानकमलां प्रभवं प्रदातुं लंकार्णवं क्षुभितसैन्यतरंगभीमं॥ वेधा ममंथ किल रज्जुभु-
जंगराजभोगावृतेन पवनात्मजमंदरेण॥ ५५॥ गद्यं॥ अथ लंकायां दह्यमानायां॥ प०॥ रक्षःस्त्रीवदनारविंदरजनी विश्वंभरा बर्हिणी व-

॥टिप्पणं॥ १ देवसमूहः २ अग्निः

वर्षारंभदशां दशाननयशःकादंबकादंबिनीं॥ वैधव्योचितवेषनिश्चितमनोलंकावधूटीजटां वेदग्धाग्निजटा सभा समकिरद्धूम्यां हनूमान्दिवि ॥५६॥ अपि च॥ एतद्विक्रमवीक्षणेन जनितामानंदबाष्पां द्रुतिं रक्षोनाथभयान्निधानुमनसां विद्याधराणां तदा॥ व्याजव्याहृतये यथा परि- णमेद्धूम्या तथा जृंभते स्वर्लोकेऽपि कलिंदशैलतनयाकल्लोलशंकावहा॥५७॥ आदौ नीलांशुकश्रीस्तदनु मरकताबद्धनीवीविभूतिः क- स्तूरीपंकभंगी क्षणमपि विकचेंदीवरस्रक्सपर्या॥ पश्चान्निम्नांजनाभा जघनकुचतटीकंठनेत्रेषु जाता दिक्कांतानां तदानीं दशमुखन- गरीदाहसंभूतधूम्या॥५८॥ हा तात हा जननि हा सुत हा सहाय हा पुत्रि हा प्रियसखि क्व नु हा हतास्मि॥ इत्यादिपौरपरिदेवनभारवाग्भिरापू- रि रावणपुरी शिखिना परीता॥५९॥ येऽवृंदारकसुंदरीजनमुखे नीराजनं निर्मितं निर्मेघे गगनेऽपि यैर्विरचिता सौदामिनीसंहतिः॥ तानि ह- र्म्याण्यपि वासराणि न गता निर्वाणमौर्वानलज्वालाडंबरमंबुधौ विदधिरे वातानलोद्यत्कणाः॥६०॥ आदीप्यमानभवनाश्च नवालयं गाढं-

॥टिप्पणं॥ १ सदृशी २ धूमसमूहः

गारशेषविभवामवलोक्य लंकां॥ व्योम्नि स्थिता निशिचराः स्वगृहाणि नूनं निर्वापयंत इव नेत्रभवैः पयोभिः॥ ६१॥ चक्रे शक्रजिदाज्ञ-
यारणमुखे यत्कर्म रक्षोगणस्तत्कर्तुं क्षणदाचरक्षितिभुजा युक्तोप्ययुक्तोभवत्॥ सप्तार्चिश्च हनूमता परिचितो लंकामधाक्षीद्यथा त
स्मिन्नामरुता युतोपि न तथा दाहक्रियायां पटुः॥ ६२॥ तस्मिन्हनूमदरणिप्रभवे हुताशे शार्द्धं विधाय पतिमेव समेतुमैच्छत्॥ लंकेश्वरेण र
णकेलिकुतूहलेन बाहोर्बलादपहृता स्फुरराजलक्ष्मीः॥ ६३॥ वाचामिदानीं किमु विस्तरेण लंकापुरीं रावणबाहुगुप्तां॥ काकुत्स्थदूतोयमुपेत्य
चक्रे कृतांतदूतस्य सुखप्रवेशां॥ ६४॥ पौलस्त्यपातकिसमागमजायमानमेनः पुनान इव वानरयायजूकः॥ निर्वर्तितोक्षविजयो निजवाल
वन्हौ हुत्वा पैलोशसमिधः स्फगातिर्बभूव॥ ६५॥ लंकादाहेप्यनार्त्तां रघुपतिदयितां चारणोक्त्या विदित्वा सानंदस्तां प्रणम्य प्रतिगमनविधौ
माप्य तस्या नियोगं॥ आरुह्यारिष्टशैलं निधिमपि पयसां स्वैरमुत्तीर्य वेगाच्चक्रे गत्वा महेंद्रं प्लवगबलपतीन्पूर्णकामान्हनूमान्॥ ६६॥ गद्यं॥

॥ टिप्पणं १ रावणपुत्रः इंद्रियंच २ राक्षसः किंशुकवृक्षस्य

अथ यथार्हं सैन्याधिपान्संमान्य मारुतिरेतैरनुयुक्तः स्ववृत्तांतमखिलमाख्यातवान्॥ तदनु पवनतनयवचनमुदिता वानरवरूथिनी यूथ-
नाथानुयाता तद्दर्शनजनितमानंदं दाशरथ्यो सुग्रीवे च संविभज्येव विवक्षितुं॥ अहमहमिकया धावंती स्वध्येसरणि दधिमुखकृतावनं मधु-
वनं हनूमदनुमत्याभिभूय मधुपानसुखमनुबभूव॥ पद्यं॥ अथाब्रवीद्धरिवरं तुंगमंगदं कृतांजलिर्दधिमुख एष रोषवान्॥ वलीमुखान्मधु-
भंजने शिलीमुखान्भवानिमान्झटिति निवारयेदिति॥ ६७॥ गद्यं॥ अयमप्येनमवोचत्॥ प०॥ दशमुखपुरमध्ये वीक्षिता मैथिली ति श्रवण-
मधु वितीर्णं येन वीरेण मह्यं॥ दधिमुख यदि सोऽयं भापते को निरुध्यान्मधु पिबतु यथेष्टं वाहिनी वानराणां॥ ६८॥ ग०॥ तदनुभयविवेशास्मु-
नत दधिमुखवचनविदितमधुवनकदनपरिभाणित जनकदुहितृदर्शनजनितप्रमदभरभरितस्तेपन तनयस्तनुविकृतिमतनुततदभिमुखा-
गमननिमित्तसंपत्तिं॥ पद्यं॥ आरुह्याद्रिमथावरुह्य विपिनान्यास्वाद्य नानाफलान्यास्फोटय प्लुतमाचरय्य वदनैरागाय वाद्यक्रमान्॥ आ-

॥टिप्पणं॥ १सुग्रीवः

लिंग्य द्रुममक्रमं मदवशादाधूय पुच्छच्छटामागदाविरभूदहं नथमिकारीनां कपीनां चमूः॥ ६९॥ निद्राक्षयादरुणितेन समीरपुत्रः सौमित्रिने-
त्रयुगलेन निपीयमानः॥ चूडामणिं करनले कलयन्ववंदे पादारविंदयुगलं भरतायजन्य॥ ७०॥ अक्लेशसंभूतगतागताभ्यां निस्तीर्णविस्तीर्ण म-
हार्णवोपि॥ आनंदसिंधौ प्रतनागमक्षमक्षस्य हंता निनरां ममज्ज॥ ७१॥ आनीतचूडामणिसंनिधानादाविः प्रमोदेन रघूद्वहेन॥ तत्रानुयुक्तः
पवमानजन्मा विज्ञापयामास कृतप्रणामः॥ ७२॥ लंकापुरोपवनसीमनि राजपुत्री मान्तौ कथं निशिचरीगणबाध्यमानां॥ केनापि पातक
वशेन सुपर्णलोके बंदीकृतामिव भुजंगमराजकन्यां॥ ७३॥ देव्यास्त्वदीयान्वयकीर्तनेन त्वन्मुद्रया च व्यपनीयशोकं॥ वार्तामभिज्ञानमयी
मया च प्रस्थातुकामः परिपूर्णकामः॥ ७४॥ ब्रम्हास्त्रवित्रस्तजयंतकृत्यां कथामभिज्ञाप्य वनेप्रवृत्तां॥ चिरं रुदंत्या जनकेंद्रपुत्र्या चूडामणिः
प्रेषित एष तुभ्यं॥ ७५॥ किं बहुना॥ देव तस्याः प्रतिष्ठासून सूना शोकपालितान्॥ मुद्रयित्वा प्रपन्नोहं त्वदभिज्ञानमुद्रया॥ ७६॥ इति श्री
विदर्भराजविरचिते चंपूरामाणे श्रीमत्सुंदरकांडः समाप्तः॥ ॥

अथ युद्धकांडः॥ ॥पद्यं॥ दृष्टे यत्र यदृच्छया पि वचस्यां देवी पुरे वर्तते सारस्यं महदभ्युदेति मदसि प्रागल्भ्यमुज्जृंभते॥ जायंते सकलाः क-
ला अपि नृणां जागर्ति कीर्तिर्न वा चेतः स्निह्यतु तत्र देशिकपदांभोजे च भोजे मम॥१॥ भां जेन तेन रचितामपि पूरयिष्यन्नर्धां यसा पि वचसा कृ
तिमस्तुदारां॥ नव्रीडितोहमधुना नवरत्नहारसंगेन किं न हृदि धार्यत एव तंतुः॥२॥ मुद्रामुद्रितजीवितां जनकजां मोहाकुलं राघवं चूडारत्न वि
लोकनेन सुचिरं निध्याय निध्याय च॥ प्रारेभे हृदि लक्ष्मणः कलयितुं पौलस्त्यविध्वंसनं धीरः पूरयितुं कथां च विमला मे केन कोंडेन स्वः॥ ३॥ आनं-
दमंथरमनंतरमांजनेयादाकर्ण्य वृत्तिमनघां जनकात्मजायाः॥ दृष्टिर्दशाननरुषा परुषायमाणा बाणासनोपरि दधे प्रभुणा रघूणां॥४॥ गद्यं॥
अथ स्कंधग्रीवोपि दशग्रीवकुपितराघवावलोकनद्विगुणीकृतरणोत्साहः साहायकमनुपालयन्नंधुमिव सिंधुमवधार्य धार्यमाग धैर्यो घ-
गाढमतिः अधिरूढत्रिकूटशिखरां लंकामधिगंतुं नंगदकुमुदनलनीलप्रमुखमपि वलीमुखानीकं समनीनयत्॥ पद्यं॥ वारिदाद-

॥टिप्पणं १सौमित्रिः तत्र न कविश्च २बाणेन मंथनच ३कूपं

पिचरामनामतः पूरितापुनरपांगधारया॥ तत्क्षणं मतिचचालदक्षिणंवाहिनीगमखिलापिवाहिनी॥५॥ गद्यं॥ ततः क्षणेनसमक्ष्यचलितकृक्ष
समुदायेमुकुंदामोदकारिणि शरभाधिकप्रसादशीलेनीलेंदीवरनंदिनि दशाननदिशाक्रमणव्यग्रतेजसि समारूढ नीलनंदनल
क्ष्मणानुगते सरभसमुदयसानुमंतमिवहनूमंतमधिगेहति निशाचरतिमिरहरण निस्तंद्रे रामचंद्रे समंततः कंदलितबहुलहरिजाल
कोलाहलभरित हरिदंतरो निरंतरास्कंदित निकटकांतारा वलिर्वलीमुखबलमहांबुधिः ससंभ्रममुदजृंभत॥ पद्यं॥ उन्नासकासरमुदंचित
पंचवक्त्रं वित्रस्तहस्ति विशारारुचमूरुयूथं॥ आलोललोचनतरंगकुरंगशावमासीदसीमविपिनं कपिनर्मघोषैः॥६॥ सैन्यैस्ततो रघुपतिः
सरितांनिवेशांवेशांतयन्विरलयन्विपिनांतराणि॥ आरुह्य सह्यमपिशैलमसह्यवातं मंदानिलैकनिलयं मलयं जगाम॥७॥ गद्यं॥ गत्वा
चतमद्रिं सौमित्रिमिदमवादीत्॥ पद्यं॥ अमीतटसमीपनिर्झरतरंगरिंखत्पयोजडीकृतपटीरभूरुहकुटीरसंसारिणः॥ मनोवि-

॥टिप्पणं॥ १ रावणं समुद्रंच २ सेनानदीच ३ अंगदःबुधश्च

धुरयंति मे मलयमेखलामेदुरादुरासदवनप्रियप्रियतमारुता मारुताः ॥८॥ इत्यालपन्करुणमेव निरुद्धवेलं शैलं महेंद्रमधिगम्य महीमहें-
द्रः ॥ आषर्तमुद्रितमिवान्वयभूपतीनामक्षय्यकीर्तिनिधिमंबुनिधिं ददर्श ॥९॥ गद्यं ॥ दृष्ट्वा च तमद्भुताकृष्टमना रामस्तदिदमाचष्ट ॥ पद्यं ॥
दुष्टुं नालमगाधतां फणिपतिः सीमांतरेखा दिशो द्वीपाः सैकतमंडलानि तदयं दूरे गिरां वारिधिः ॥ येषामेष सखादखानिनखैर्येनाथवा पू-
रितस्तेषां नः कुलभूभुजामविहतस्थैम्ने महिम्ने नमः ॥१०॥ गद्यं ॥ अथ हरींद्रोपि महेंद्रोपांतकांतारशोभिनिर्लोभनीयमलयशैलानिलेवेला-
वनप्रदेशे दाशरथेर्निदेशेन निवेशयामास बलमखिलं ॥ पद्यं ॥ सरसपेटीरकुंजवनसंजवनाभिपतन्मृगमदगंध,गंधवहमेदुरिते जलधेः
॥ तटनिकटे दरस्फुटिततालरसालफलै रुदितमदाविचेरुरुदरंभरयो हरयः ॥११॥ गद्यं ॥ अनंतरमपगमिव चलितं महांभोधिमंभोधिरोध
सिद्धतसंषेशं रोदसीलंघनविशृंखललाघवं राघवानीकमनीकोन्मुखं चारमुखादवधार्य धार्यमाणहृदयांतकः पंकलीन चरण इवे

॥टिप्पणं॥ १ स्थिरत्वाय २ मंदानिले ३ चंदनं ४ सभा

रावणोरावणो विधेयं परमजानन्जानकीमप्य विमोक्तुकामः कामपरतंत्रितो मंत्रिभिः समं समाजमाजगाम॥ पद्यं॥ रहस्तदानीं रजनीचरेंद्रः प्रह-
स्तपूर्वानिदमाबभाषे॥ इदंतु मेवांछितमीक्षितं वो वदंतु यद्देरिजयो चितंनः॥१२॥ गद्यं॥ अमी च पुनराशयज्ञा विज्ञापयामासुः॥ देवजीवत्स्व
भवदाज्ञापरेष्वनुचरेषु परमस्मास्ककस्मादयमवापो दुरवापोरु भुज पंजरानीतां सीतां जातु न जहातु नाथ इत्यभिदधानेषु प्रधानेषु रंभोपहि-
त हटात्कारसंभव मंभोजसंभवशाप मंतरायमावेदयंतं दुर्नयं तमग्रजन्मानं संमानयन्विनयविज्ञानभूषणो बिभीषणः सरोषमिदमवादी-
त्॥ पद्यं॥ अहह विधिनियोगादपनक्तंचरेंद्र त्वमसि परकलत्रे दुर्निवारानुरागः॥ अरुणदव शिखायामामिषग्रासमोहादविरतकृत जि
व्हाचापलः केसरीव॥१३॥ आकर्ण्य किन्नरमुखादनघेस्त्ववंशे काकुत्स्थदारहरणोपनतं कलंकं॥ हाहेति मीलितदृशः करयोर्युगं तदष्टौ
श्रुतीरपिदधातु कथं विधातुः॥१४॥ पश्येदानीमुदधिपरिखापालिता कुत्र लंका वाचातीतः क्वनु वनचराद्दागतो दुर्विपाकः॥ कर्तुंन

॥टिप्पणं॥ १ कर्णान्

त्कंचर परिभवं कापि मायेव शंके जातासीता धरणितनया जानकी मैथिलीति ॥१५॥ किंबहुना ॥नगणयसियद्विवं वानरं वानरं वा ननुप-
रिचितचार्यौ जिष्णुभूकार्तवीर्यौ ॥ नकलयसि यदित्वं नं दिशा पंच धातुर्वरमपि नरवर्जं दुर्जयो देवयोगः ॥१६॥ग०॥इत्यादिनीतिसहितं
हितमभिहितवंतं निजमनुजमवज्ञायज्ञातिरय अरातिपक्षः शिक्षणीय इति शंसंतं नृशंसं तमेकं तु दरोषणभाषणो विभीषणो वि
हाय विहायसि समुसतंतमनूसतद्भिश्चतुर्भिरमात्यैः समवतीत्य वारिधिं दूरत एव सवितर्कमुद्ग्रीवान्कपीवादीनंतरिक्षगत एवमाचच
क्षे ॥पद्यं॥ पौलस्त्यमग्रजनुषं परुषं चरंतं संत्यज्य बांधवजनं च विभीषणोहं॥ रामं विराममिह विद्विषतामवापमापन्नदैन्यहरणं श
रणं ममेति ॥१७॥गद्यं॥ अनंतरमतिकरुणं समीरयंतं समीरभुवाच समत्यभिज्ञं विज्ञापितं निशाचरपतेरनुजं निशम्य तदा तदाग
मनाय किं कारणमिति शंकापरवशो निवेदयति हरीशे दाशरथिरपि दयमानः स्मयमानो मधुरमिदमभाषत ॥पद्यं॥ अभयागतो
॥टिप्पणं॥ १ भाषमाणं २ मर्मस्पृग् ३ अग्रजन्मानं॥

यमपयाति चेन्मुधा रघवो भवंति लघवो न किं सखे॥ अनुजोयमस्क तनुजोथ वारिपोः करुणापदं हि शरणागतो जनः॥१८॥ गद्यं॥
तदनु हृदयविदा हनूमता सरयमानीतो विनीतो यमोशरपतिरवंदत दाशरथिं॥ पद्यं॥ समस्तमाह विनतं रजनीचरेंद्रं दत्तं तदद्य
भवते दशकंठराज्यं॥ अस्मिन्नुदाहरणमग्रज राज्यभोक्ता सानुप्लुवः प्लवगमंडलसार्वभौमः॥१९॥ श्रेयः पदात्पदमुदेति विधेः प्रसा
दात्पायस्तदद्य फलितं हि बिभीषणे यत्॥ रेखातपत्रसहितं पदमस्य गृह्णन्नेकातपत्रसहितं पदमेष भेजे॥ २०॥ गद्यं॥ असौ पुनरग्र
त एव भरताग्रजापांगसुधातरंगाभिषिक्तोपि पुनरुक्तराज्याभिषेकः सकलविस्रंभभाजनतया सुग्रीव इवापरो दशग्रीवबलम -
खिलमावेद्य सद्य एव लंकापुरसमास्कंदनाय सेनासमुत्तरणहेतुं सेतुं विधातुमाराधयतु वारान्निधिमिति सविनयमेनं विज्ञापितवान्॥
पद्यं॥ अथ वारांनिधिं ध्यायन्नंभोधिहृदयेशयः॥ ध्यानशेदर्भशयनं वेद्दिमिव हुताशनः॥२१॥ ग०॥ तत्रकुशास्तरणमध्यमध्यासीने नि -

॥टिप्पणं॥ १ बिभीषणः २ सुग्रीवः

ध्यानवति देवे रामचंद्रे॥ नियंत्रितइव नियतिवशाभिशात्रयमपि नसादं नाससादयोदसांपतिः॥ पद्यं॥ व्यापारयन्नथविलोचनकोणमब्धौ कोपारुणंकुटिलितभ्रुकुटीविटंकः॥ आदातुमैहत धनुः प्रथनो रघूणां पैतामहप्रथमसर्गसमापनाय॥ २२॥ गद्यं॥ आदाय च दुरापं चापमारोपयत विशिखमनलशिखं॥ पद्यं॥ नाथो विमोकुमुदयुंक्त नयावदेवपाथोनिधेरुपरि पावकरूपमस्त्रं॥ संतापिनी नयनवारिमिषेण ताम्यन्मंदाकिनी किमुत वारुणमालंबे॥ २३॥ रुषा विशिखमुच्छिखं जहति राघवेलाघवादजायत रुजायतश्वासितनक्रचक्रकुलं॥ रसातलवन्निमिस्तिमितकुंभिकुंभीनसप्रविष्टगिरिकंदरं तरलमंतरं वारिधेः॥ २४॥ गद्यं॥ तत्क्षणं जलनिधिः क्षंतापयुगांतानलस्य महतोपि गरलदहनोष्मणां सोढापि वाडवगाढावले पस्यति तिक्ष्णुरपि भार्गव तीक्ष्णपरशोः परिशोषयंतमंतरंगमंगारमयं शरमयं निमिषमपि न विषेहे॥ पद्यं॥ शरणमथ शरव्यथा निदानं जलनिधिरेष जगाम राममेव॥ परुषकुलिशपातमेव किंवा जलधरमर्थयतेन

॥ टिप्पणं॥ १देवं २समुद्रः

जीवलोकः ॥२५॥ गद्यं ॥ आगत्यचानुपदमुपदीकृतनूतनरत्नराशिर्वारिराशिर्विनीतवेषोविशेषोपजातनतिभिर्नुतिभिरभ्यनंदयद्रघुनंद
नं॥ तदनु तदनुसंहितममोघमस्त्रं वैधात्रं कुत्रचन वनसीमनिविनिपात्यसाध्यतेमयासलिलविष्टंभः संप्रत्येवनलोविदधातुसेतु मित्यभिद
धानोमंदमंदमंतरधात्॥ पद्यं॥ आदिष्टारघुपुंगवेन हरयोप्यष्टासुदिक्षुक्षणात्त्रैलोक्यांचितमूलमध्यशिखरान्धोत्रीधरानाहरन्॥ यैःक्षिप्तैः
सलिलेनलेनजलधिर्यातोपिजंबालतांनिगच्छन्त्यचिरायनिर्झरपयःपूरेपुपूरेपुनः॥२६॥ अथजलधौ निपेतुरतिदूरनिपातदलज्ज
लचरदत्तजीवनवर्गंधमहौषधयः॥स्फुटितधराविराजदहिपुंगवफूत्करणक्षुभितगुहागृहासिकमहाहरयोगिरयः॥२७॥ अलक्षि
तमहीधरग्रहणमस्फुटक्षेपणांविचित्रघटनं ततोविरचितोनलेनामुना॥ अबोधिहरियूथपैरधिपयोधिसेतुर्महान्भुवोभुजइवाभव
न्निजतनूभुवोलंभयन्॥२८॥ गद्यं॥ अनंतरमंतेर्मुखाइवबलीमुखाःप्रबोधेनेवसेतुपथेनसंसारमिवदुस्तरंतरंणिपतिमतीत्यसद्य

॥टिप्पणं॥ ॥१स्तुतिभिः॥ २ब्रह्मास्त्रं॥ ३पर्वतान्॥ ४ज्ञानिनः॥ ५समुद्रं॥

एवमकाशंगिरीशं सुवेलमवलोकयंतो मुहुररविंदं तमहांतमानंदं ॥ पद्यं ॥ वलयिततटदेशैर्वाहिनीनां निवेशैरविरलवनरेखामध्यमध्यास्तरा
मः ॥ कपिकलकलशीर्यत्कंदरामंदिरांतश्चलितकुपितसिंहत्रस्तवेलं सुवेलं ॥ २० ॥ गद्यं ॥ तदनु दशमुखः शुकमुखादतिलंघितजलधिमधि
गतसुवेलाराममंरामं निशम्य सम्यगवगमनाय रघुनायकबलमनुप्रहितयोर्विदितवेषविभीषणोवेदितकुपितकपिलोकनियंत्रणनितांत
खिन्नयोर्विपन्नाधारदाशरथिविमोचितप्राणयोः शुकसारणयोर्वचसा प्रासादाग्रमासाद्य प्रत्येकशस्तदावेद्यमानान्प्रवर्धमानसमरसन्न
हमतीन्प्लवंगमसेनाधिपतीनतिधीरतयासाववधीरणमवेक्षमाणः प्रतिपक्षबलप्रशंसिनौ तावुभावप्युपेक्षमाणः शार्दूलप्रभृतिभिः प्रण
यिभिरप्यवगताशेषवृत्तांतः सांतस्तापः सुचिरमनुचिंतयन्नंतिकासीनमतिविनयप्रह्वं विद्युज्जिह्वमुपह्वरे किमप्यभिधाय सौधादवत
तार ॥ तत्क्षणं क्षणदाचरोपि निदेशान्निशाचरपतेर्दाशरथिशिरः सशरं धनुरपि निर्माय मायानुभावादाहवानीतमित्यभिधाय

॥ टिप्पणं ॥ ॥ १ उपवनं ॥ २ एकांते ॥

न्निधायच पुरो निदाघातिशयसंतापिनीं वासंतीमिव वैद्युतानलश्चिरकालविह्वलामाकुलीचकार मैथिलीं ॥ ततः प्रबुद्धा च मुग्धा पुनस्त
थ्यमिति विचार्य तदनार्यपर्यदेवयत पतिदेवता ॥ पद्यं ॥ रक्षोवरोधवसतिं रजनीचरीणां रक्षोपरोधमपि रावणभर्त्सनं च ॥ सर्वं स
हे यदुपलंभधिया स एवं सर्वंसहे भवति जीवति हंत सीता ॥ ३० ॥ गद्यं ॥ एवमत्याहितमत्या समेतामेतामासाद्य सखि वैदेहि वैदेहि
वचः कथमियं तव दीना दशा दशाननकृता माया हि माया हि मनसि वैधुर्यं निखिलजगतीधुर्यभुजबलाभिरामे रामे किमिदमनार्यम
विचार्यमित्यभिदधाना नवीनासारनिष्यंदिनी कादंबिनीव घर्मोद्वेगिनीं केकिनीं सरमा चिरमाश्वासयामास ॥ पद्यं ॥ अथ निगदितनी
तिं मुंच मुंचेति सीतामविरतरणकंडूभीषणो रावणोयं ॥ मनसि न बहु मेने मंत्रिणं माल्यवंतं दिविपरममरीणां मंडलं माल्यवंतं ॥ ३१ ॥
॥ गद्यं ॥ अथ रामोपि कामोचितवेष बिभीषणामात्यविदितरक्षोनगररक्षोदंतोहदंतोपजातसमरसंरंभविधिरंबुधिमेखलालंकार

॥ टिप्पणं ॥ १ समूहं २ मालायुक्तं

मणेर्लंकायाः प्राग्द्वारस्थाय प्रहस्ताय पर्यस्ताहित[1]प्राणानिलं नीलं दक्षिणद्वाररक्षिणोर्महोदरमहापार्श्वयोर्विश्वत्रयविजयधौरेयं तौ
रेयं प्रत्यग्द्वारपालनाधिकृते पाकशासनाजितपराक्रममिव तनूमंतं हनूमंतमंतर्व्यूहविहितरक्षाय विरूपाक्षाय रक्षःप्लवंगमकक्षा
धिपतीन्प्रतिनिधीन्विनिधाय विधाय च सज्जं धनुरनुजेन समं समीकाभिमुखेन दशमुखेन गुप्तमुत्तरं गोपुरमुत्तरं गोबलैरुपरुरोध
॥ पद्यं ॥ अत्याकुलां हरिबलैरवलोक्य लंकां दत्तार्गलेषु दशकंधरकिंकरेषु ॥ आरक्षकैस्त्वरितमंतकराजधान्या मुद्घाटिताभिरु
दभाधिकवाटिकाभिः ॥ ३२ ॥ गद्यं ॥ तत्क्षणं च लक्ष्मणाग्रजः सुग्रीवेण सह सुवेलाचलकूटमधिरूढस्त्रिकूटावनीधरचूडामणिं सिं-
हलद्वीपकमलकर्णिकां निर्माणकौशलीं विश्वकर्मणो निवेशं दरीं निशाचरहरीणां अनारतबंदीकृतामरपुरंध्रीबाष्पनदीमातृकोप
वनसीमां तां सीमांतरात् निरंतरसेवासमागतदिक्पालमातंगमदांबुपंकिलबाह्यांगणोत्तुंगां लंकामवलोकमानस्तत्रैकत्र समुन्नतं सौधमधिवसं

॥ टिप्पणं ॥ ॥ १ शत्रुः ॥ २ अंगदं ॥ ३ मूर्तिमंतं ॥ ४ शृंगं ॥

तं मंनमसमिव सदेहवद्मंतिकचरादस्त विमल मुक्तातपत्रमिषात्स तारकेण विभावरीपतिनेव सेव्यमानं वैमानिकवधूविधूयमानचामरद्वंद्व-
शोभितमभितश्चलितमंदाकिनीपरीवाहमिवांजनाचलमखिलजगद्विजयवर्णावलीमतिनिर्णायकैरनेकविधसमीकाभिघातमग्नभग्नैरग-
वणविषाणकुलिशाग्रैरुद्दीर्णविशालवक्षस्थलफलकमानीलतमालसच्छायमाच्छादिनाभिनवलोहितपटमापाटलसंध्यारागबंधुरं कं[1]धरमि-
व ददर्श दशकंधरं॥ पद्यं॥ कोपादुत्पतितस्तदा हरिपतिः को[2]टीरमुत्पाटितं चक्रे नैर्ऋतनायकस्य स्वहृदी चक्रे च वैभीषणं॥ युध्वा च प्रथमाव-
मानकुपितेनैतेन बुध्वा ततो मायामस्य जगाम कोमलगुणग्रामं स रामं पुनः॥ ३३॥ गद्यं॥ ततस्तत्साहसोपलंभविधिना दाशरथिना समामंत्र्य
मंत्रिभिः सममादिष्टः साधिष्ठभुजशौर्यशाली वालिनंदनः सालंसालमुल्लंघयन्लंकां प्रविश्य नृशंसमिति शशंस निशिचरपतिं॥ पद्यं॥ सोहं प्लवं-
गमपतेस्तनयस्त्वदीयनिश्वासरोधिनिजवालधिमंडलस्य॥ कालस्य दूषणखरत्रिशिरोमुखानां पौलस्त्य मां रघुपतेरवधेहि दूतं॥ ३४॥ रक्षः

॥ टिप्पणं॥ १ जलधरं २ किरीटं॥

पतेरघुपतेर्नयनं तृतीयमास्कंदनीयमिति ह्रामनुषु कलत्रं॥ अंभोजमित्यैलिकसंभवमक्षि शंभोर्मंदाकिनीमधुकरस्तु यथा मदांधः॥ ३५॥ किं
च॥ एकं हि हयसंभवात्परिभवान्म्लानं द्वितीयं पुनर्दैन्यं द्वाविनया तृतीयमपि मनानाहितांहे हनात्॥ इत्थं त्वच्चरितैः पितामहमुखान्येकं वि
नेवाभवन् तच्चैकं न विधेहि दाशरथये देया त्वया मैथिली॥ ३६॥ कौबेरस्य नु पुष्पकस्य हरणं कैलासविक्षेपणं दिक्पालाक्रमणं च जल्पमिमु
हुः किंवा यशस्तावना॥ वेषं संयमिनो विधाय विजने देवीं वने जानकीं यं गादाहरनात्त्वया परिचितं वीरव्रतस्योचितं॥ ३७॥ किंबहुना॥ पूजोपहा
ररचनाय पुरा पुरारेश्छिन्नेषु मूर्धसु न वस्त्ववशेऽपि तं यन्॥ दशमस्तदय कुतुकी दशमं शिरस्ते रामो बलिं रचयितुं रणदेवतायै॥ ३८॥ गद्यं॥ एवम
रुंतुदभाषणरोषणेन रावणेन गृह्यतामयं निगृह्यतामिति मग्यमादिशानालं षितभुजप्रकोष्ठानाशारांश्चतुरश्चतुरो यं भुजंगानि च विहं-
गाधिपो गृहीत्वा भुवि निपात्य चैतान्यादाहतेन प्रासादशृंगमपि भिंदन्नविंदन्नात्मनः प्रतिरथपंक्तिरथ भुवो विवेश निवेशं॥ पद्यं॥ रघुतन

॥टिप्पणं॥ १ ललाटं २ संन्यासिनः ३ रामस्य

यस्ततोविदितरावणदुर्विनयःकुपितमनामनागिवदधेकुटिलांभृकुटीं॥ अथपरिवव्रुराशरपुरंहरयःसरयंयुगविगमेयथायुगपदंबुधिमै
र्वशिखाः॥ ३९॥ ततोमदपरिप्लुवप्लवगवीररसंरंभणक्षणक्षुभितकोणपप्रकरपाणिकोणाहतः॥ रवैरधिकभैरवैरुपरुरोधरोदोंतरंतरं-
गितघनाघनस्तनितबंधुभिर्दुंदुभिः॥ ४०॥ गद्यं॥ तेनचसमंततःकंदलयतादलयतेवजगंतिदुंदुभिनिर्घोषेणरोषेणचप्रेर्यमाणाः
केसरिणइवगिरिकंदरान्मंदिरान्निर्गत्यगल्यंतरायसंधायकान्यपत्यानीवानिमित्तान्यनवलोकमानाविमानाधिगतविबुधसीमंतिनी
भिःसहविजिहीर्षयेवप्रस्थानसमयपरिम्लानमुखीःसुमुखीरप्यगणयंतोनिरंतरज्वलितकोपानलनयनकोणारुणालातशतनिपा
तवित्रासचलितनिजवारणानिवारणावेशपरवशाःदिशामुखमुखरितशिवारवाम्रेडितव्याकुलीकृतकुलमहीध्रागृध्रायतपक्ष
विक्षेपकृतपताकानिकायपुनरुक्तसमुत्तुंगशतांगसंघातपरिगतानितांतनिशितकृतांतदंष्ट्राखरतरनखरपट्टिसप्रास-

॥टिप्पणं॥ ॥ १ विघ्नः॥ २ प्रहर्तुमिच्छयेव॥ ३ परतंत्राः॥ ४ कुलाचलाः॥

परश्वधगदामुसलशक्तितोमरमुद्गलपरिघद्रुघणकृपाणधारिणो दारुणाजगरसंतानसंवीता इव विंध्यकूटाव्यूढातिकरालकालायसकंकटा
विकल्पा इव कल्पांबुदानां व्यक्तय इव कालरात्रेर्विवर्ता इव कलिकालस्य च भयंकराः समरांगणमवतारयंतः समीरयंतो वीरवादानादाय
च शरासनमासारैरिव गिरिमंभोधरा दूरापातिभिः शिलीमुखैर्वलीमुखबलमखिलमक्षोभयंत रक्षोभटाः॥ पद्यं॥ तत्वोधुतनरवायुधस्तरु
परित्रुटत्तोमरः शिलानिहतमुद्गरः शिखरिभिन्नमत्तद्विपः॥ स्वपक्षविजयैषिभिर्द्विविस्फरास्फैरेराकुलैरलक्षि हरिरक्षसामतिभयंकरः सं
गरः॥ ४१॥ गद्यं॥ क्रमेण च कुपितकपिवीरविदूषितनैर्ऋतभुजप्रतापानल इवास्तंभजति भगवति भानुमति मथितायुधयातुधानगल
नालप्रणालपरिवाहिलोहितनदीपूर इव विदूरमंतरितहरिदाभोगे संध्यारागे विक्रांतहरिनखाक्रांतदंतावलविपुलकुंभस्थलमुक्तमुक्ता
कलाप इव वियति विजृंभमाणे तारागणे रणरभसचलितरथगजतुरगपदातिपादाहतविश्वंभरांतरालजन्मनि रजसीव भुवनमास्कं

॥टिप्पणं॥ ॥ १कवचाः २परिणामाः ३जन्मनि॥

दतितमसितामसीन्चरेष्विवसशोकेपुचक्रवाकेषु दाशरथिबलइव प्रमदाकरे कुमुदाकरे॥ पद्यं॥ आसारधारांप्रकिरन् शराणामाश्वा
सयन्मानसमाशराणां॥ वीरोहरीन्संयतिमेघनादो विव्याधहंसानिवमेघनादः॥ ४२॥ रणेतदनुदारुणे रभसमंगदोरावणेर्द्रुमेणमहताहत
श्लथधुरीणयानव्रजं॥ शितेनशतकोटिना शिखरिकूटमिंद्रोयथा ममाथचरथंमनोरथमपिक्षणाद्रक्षसां॥ ४३॥ वियत्तलेतदनुविलीय
माययासलक्षयन्रघुतनयंसलक्ष्मणं॥ अजिम्हगानधिगतजिम्हगाकृतीनमर्षतः समितिववर्षरावणिः॥ ४४॥ लक्ष्मणानुगतंरामचं
द्रंराद्भयंकराः॥ बबंधुर्दारुणतमा बंधच्छिदमभीशराः॥ ४५॥ यावद्याति पुरंपुरंदरजयीयावद्दशास्याज्ञयासीतापुष्पकवासिनी रघुसुतौ
दृष्ट्वापुरःशोचति॥ तावत्तेगलिताः सुपर्णगरुतांवातेन वाताशनादीसौचंद्रदिवाकराविवतमोमुक्तौततोराघवौ॥ ४६॥ दुर्वारेत
दनुहयाश्वबलयोरुज्जृंभमाणेरणे धूम्राक्षंभुजतःप्रकंपनमथद्वेधान्यधान्मारुतिः॥ तारेयोपिचवज्रदंष्ट्रमचलान्नीलःप्रहस्तंबला
॥टिप्पणं॥ ॥१ इंद्रजित् २ सर्पः ३ इंद्रजित्॥

त्तत्सर्वं दशकंधरायच किंतेरुक्तं चनक्तंचरैः॥ ४७॥ गद्यं॥ अथतदानीमनीकिनीनाथवधकोपोदयादायोधनोत्कंठो दशकंठः सकल
जगद्दंडभरितजयानकभयानकनिनदबधिरिताशेषशेषाहिलोचनोरोचिष्णुजिष्णुकोदंडधरः सलिलधरइवरुक्मेरुशृंगंसमुत्तुंगं
रथमलंकुर्वन्सर्वतश्चलितसकलचतुरंगसंगतयालंकयेवस्वयमनुगम्यमानः क्रमादतिक्रम्य पुरतोरणं पुरतोरणचलितमा
लोकयतनिखिलमपि वलीमुखबलं ॥ पद्यं॥ जेतारमाहवमुखेदशदिक्पतीनां दृष्ट्वा पुरो दशमुखं रघुनंदनस्य॥ श्लाघावशेनन
चचालशिरः परंतत्सव्येतरंभुजशिरोपिसमीक्ष्यलक्ष्यं॥ ४८॥ अथमदगर्जितैरधिकतर्जितदिक्करिभिर्दशवदनस्तदा दशदिगंतर
मंतरयन्॥ समरमुखेसरवेलपदचंक्रमतो विदधेहरिकुलमाकुलं जलधिमादिवराहइव ॥ ४९॥ गद्यं॥ अनंतरमनीकास्कंदकंदलि-
तामर्षवर्षतं गिरीन्द्रहरीणामधिपतिमतिनिष्ठुरेणमुष्टिना गाढमभिनिघ्नंतं हनूमंतममंदलाघवाक्रांतध्वजकिरीटांचलंमीलमपि निखिल

॥टिप्पणं॥ ॥ १सेनापतिः २दुंदुभिः ३इंद्रः॥

जगज्जितामहता बलेन वातूल इव तूलजालं कपिकुलमपसारयन्न विरतशरासार वर्षिणमैन्द्रमत्रीणं सौमित्रिमपि शक्त्या गाढमुरसि वि-
व्याधकव्यादाधिपतिः ॥ पद्यं ॥ अैवकीर्यदाशरथिरश्रुझरैरनुजं पुलस्त्यतनुजं च शरैः ॥ युगपव्द्यधात्करुणवीररसौ युधि शोकहर्षश-
बलं च बलं ॥ ५० ॥ आधूय मोहमहितोन्मथनाय यावत्सौमित्रिरेष समुदंचति तावदेव ॥ पौलस्त्यमेष परिभूय परंतदीयान्प्राणान्मुमोच द-
ययान मुमोच बाणान् ॥ ५१ ॥ प्राप्य तत्प्रथमं युद्धे पराजयमुदंजयन् ॥ दशाननः पुरीं प्राप दिनदीपदशाननः ॥ ५२ ॥ प्राबोधयत्तदनुपंक्ति-
मुखः शयालुं कालं विनापि च कथं च न कुंभकर्णं ॥ आदेशतः स च विभोरपुनः प्रबोधसंवेशधाम समरांगणमाजगाम ॥ ५३ ॥ ग० ॥ आगतं च त-
मंजनाचलनिकाशमाकाशतलाक्रमित त्रिशूलं शूलधरमिव जगत्क्षयोद्युक्तं नक्तंचरमवलोक्य शाम्यत्सहजभुजतेजोविशेषमशेषा-
सु दिक्षु धावमानं पवमानचलितजलदपारिप्लवप्लवगबलमंगदो धीरमवादीत् ॥ पद्यं ॥ कपयः केकसेयानां कापि सेयं विभीषिका ॥ अ-

॥ टिप्पणं ॥ ५ १ वातसमूहः २ कार्पासः ३ रिपुसंमुखीनं ४ अभिरभ्य ५ चकार

भूरभूतपूर्वंवः प्राकृतंभयवैकृतं॥ ५४ ॥ गद्यं ॥ अथहरयोपिसरयमनुनयसंगतमंगदवचनमवधारयंतोधारयंतः समरसन्नाहान्दिङ्नागा
इवप्रतिनिवृत्ताः प्रमत्ताशयमिवैरावणं रावणानुजं विंध्याचलमिवयुगांतानिलाः समंतादाहतैर्गिरिभिस्तरुभिरप्यवाकिरन्॥ पद्यं ॥ क्षिप्ताः सं
यतिपुष्पिताः क्षितिरुहास्तेरक्षसो वक्षसिप्रस्विन्नेपटवासपांसवइ वालीयंतचूर्णीकृताः॥ मुक्तायेधरणीधरामुहुरमी तद्वाहुसंघट्टनात्सत्या
षृत्यपरं प्रहर्त्तुरभवन्खेदायभेदायच ॥५५॥ ज्वलदनलंत्रिशूलमुपरिभ्रमयन्नमयन्नयमवनीमनीकमदखेलनदुर्ललितः॥ सपदिबभं
जनीलमृषभंशरभंच बलादहरतगंधमादनमेरुंधगवाक्षमपि॥ ५६॥ गद्यं॥ ततश्चसहजबलचापलाधिगतलाघवंराघवंशरणम-
भ्येवानंराघवानीकमाश्वासयन्विश्वाधिकविपुलभुजवीर्योविकीर्यद्विषतिसर्वतः पर्वतान्विधायविचित्रमतिचिरंयुद्धंनक्तंचरविमु-
क्तधात्रीधरवशाःकुलिशदारितइवकुलभूधरोधरायामचेतनइवपपातहरिकुलपतिः॥ पद्यं॥ परिगृह्यतंझटितिबाहुपंजरेचलिते

॥टिप्पणं॥ १रुद्धवान् २मासं॥

पुरंतदनु रावणानुजे॥ अविनीतवालिछतमथनः प्रभोरयशःप्रमृष्टमितिहृष्टमाशंरे॥५७॥ गद्यं॥ तत्रविचित्रकुसुमपरिमलशिशिरोपचार
सचेतनोद्ग्रीवसुग्रीवनखमुखाकलितशूर्पणखामुखानुकारः सचमत्कारमुत्सुत्याक्षिगतमेनमनालक्ष्यवैलक्ष्यतःप्रतिनिवृत्तो विवृत्तोत्कारके
क्षणः क्षेणदाचरः प्रतिक्षणमतिक्षीबतया प्रतिपक्षबलमिव स्वपक्षबलमपिभक्षयन्नलक्षयन्सौमित्रिमद्रिशिखरान्विमुंचन्नेवायमंज
साराममाजगाम॥ पद्यं॥ भिंदन्शूलमथार्धचंद्रमुखतो वीरोरघूणांपतिर्बाणानत्र मुमोच वालिविपदो मारीचमर्मच्छिदः॥ आलोक्याथसि
तान्विदारितशिखानस्मिन्किंचित्करान्वायव्यंपुनरैंद्रमप्यरिवधूवैधव्यधुर्यंदधे॥५८॥ रामास्त्रोद्दलितेषु राक्षसपते रंगेषु तुंगोभुजः
प्रागेको निपपात मंदर इव प्रत्यर्थिसेनांबुधौ॥ सिंधौ निष्पतितः परोपि ददृशे सेतुर्द्वितीयो यथा छिन्नंव्योम्नि शिरस्तुरीयमभवत्कूटं त्रिकूटस्य वा॥
॥५९॥ ग॰॥ तदनुमोदभरितहरिबलकोलाहलाकर्णनविदितकुंभकर्णवधपरिम्लानमुखेन दशमुखेन सहोदरमहोदरमहापार्श्वौ सहायौ

॥ टिप्पणं॥ १राक्षसैः २निशाचरः ३मत्ततया ४छिन्नेषु ५शत्रुः॥

विधाय समादिष्टाः ॥ कुमारान्नरांतकदेवांतकातिकायत्रिशिरसः पितुर्निदेशान्निवेशमिव पितृपतेः प्राविशन्नमी समीकभुवं ॥ पद्यं ॥ अज-
निपुनः समीकमनयोरुभयोर्बलयोरवदलिते सुरवैच यदनुज्झितरोषभरं ॥ अमरमृगीदृशामपि यदाशाय पूर्तिकरं समरसमुत्सुकेन मु-
निनाय दृढदृष्टवरं ॥ ६० ॥ ममाथ शैलैरथ वालिनंदनो नरांतकं संयति वानरांतकं ॥ हनूमता सोपि हतः सुरांतकः पुरांतकेनेव रुषा पुरांतकः ॥ ६१ ॥
॥ग०॥ अनंतरमसमसमरशीलेन नीलेन निहते महोदरे मारुतिमथितशिरसि त्रिशिरसि विशासितेषु महापार्श्वादिषु वाहिनीपतिषु निर्भरविषाद-
रोषपरवशो निशाचरः साकार इव तमोनिकायः सरयमतिकायः समागत्य वृत्रासुर इव सुत्राम्णा सुमित्रासुतेन सह वितेने विचित्रमायोधनं ॥ प-
द्यं ॥ स चस्कचिरं नियुध्यतमवध्य इतीव वरादनिलगिराविबुध्य पुनरस्त्रमधत्त विधेः ॥ दलितमनेन तद्विविसमुत्पत्ति तं जगतामतनुत राहुभी-
तिमधिकामतिकायशिरः ॥ ६२ ॥ अनुनीय रावणिरथो विधुरं पितरं दधत्पृथुसमीकधुरं ॥ सरथी समेत्य सधनुः शरधिश्चलितश्च भूमिरधिदाशर

॥टिप्पणं॥ १ यमस्य। २ संग्रामांगणं॥ ३ युद्धं ४ विह्वलं ॥

थी॥६३॥गद्यं॥ अधिसमरमराति जयमनोरथायरथाभिरक्षायैरक्षांसि परितः प्रकल्प्य प्रतर्प्य च हविषा प्रदक्षिणाशिखा षंतं शिखावंतं मंत्राधिगता
निविविधान्यस्त्राणि दधानस्तिरोधानगत एवाशितसुरैवैः शिलीमुखैर्निर्माय निखिलमर्माहतिं निस्त्रिंशक्रमः क्रव्यादो व्याधइव हरीन्विधुरीचकार॥पद्यं॥
सहलक्ष्मणं तमपि दाशरथिं परुषोनिदाघइव पद्मसरः॥ विकलाशयं विधुरसत्वमयं विरचय्य धाम च जगाम शरैः॥६४॥ क्षतोर्के भवते
जसिक्षपितरोमचंद्रद्युतौ विमुच्य सति निर्गते विशिखवृष्टिमस्मिन्घने॥ अदीप्तनलमस्फुरत्कुमुदमस्तनीलोत्पलं समुत्तरलजीवे-
नं समभवत्तदा वाहिनी॥६५॥ अचलमथ सलीलमोषधीनां हरति हनूमति जांबवन्नियोगात्॥ विचलितनभवद्बलं विशल्यं विबुधम
नोपि विधूतशोकशल्यं॥६६॥ गद्यं॥ तेन पुनः सहजतेजोभारितेन दावानलेनेव वानरबलेन दह्यमानां दरीमिव पुरीं विहाय पंचाननाथिव
पंक्त्याननविदेशातश्चलितमखिलरिपुप्रकंपनमकंपनमाहत प्लवंगसंघं प्रजंघं चांगदभुजप्रतापानलशलभावुभावपि निशम्य निशाम्य

॥टिप्पणं॥ १ वन्हिं॥ २ सुग्रीवः सौरातपश्च॥ ३ दाशरथिः चंद्रश्च॥ ४ शरः उदकमिति यावत् बाणश्च॥ ५ जीवः उदकं च॥ ६ सेना नदी च॥

वद्विविदमैंदावदारिनौ महारथौ शोणिताक्षयूपाक्षावपि कोपाक्रांतपरुषसंरंभौ कुंभनिकुंभौ समुत्तभ्य बाहुंस्कंबाहू मारीचावपि वराघवभुजाभ्यां कर्णाबद्ध
नूमञ्जामद्भुतं युद्धमेतन्निषातौ ॥ पद्यं ॥ भूमौ ततः प्लवगराजभुजेन विद्धमालोक्य कुंभमसहन्निरहं तदीयं ॥ शोकादगाद निलसूनुहतो निकुंभस्तत्रा
मयुक्तममरीकुचकुंभमेव ॥ ६७ ॥ गद्यं ॥ ततः कोणपपतिनियुक्तं युक्तमखिलवादिनीभिराहवाटोपमुखरं खरात्मजं मकराक्षमैक्ष्वाककुमारोपि वि
पक्षमपि सपक्षइव समक्षमनयज्जनेन पितुः ॥ पद्यं ॥ कृत्वामूर्द्ध निशासनं पितुरथो गत्वाग्रणीं रावणिर्हुत्वानत्र महाभुजो हुतभुजं धृत्वा महास्त्रा-
णि च ॥ स्थित्वा व्योम्नि मायया शरचयं त्यक्त्वा च भित्वा च भूं बुद्ध्वा राघवकोपमाप सहसा लंकामलंकोनरः ॥ ६८ ॥ गद्यं ॥ ततः तत्रत्याचः प्रतिहाराद-
यंस प्रातिहारिको निर्गत्य निकृत्यासिना कांचिदंजनेयस्य पुरतो मायामयीं मैथिलीमकुंठा कृतमनसि तन्मित्रा कस्मिकमिदमतथ्यमपि तथ्य
मेव बुध्वा चिराय युध्वा निराशे प्रतिनिवृत्ते निविहीषधिपक्षमशुर्विशीसनारंभि निकुंभिलामामायमध्य एव पावर्तनन्नन्नमतिविचित्रं ॥ ततनुदनू

॥ टिप्पणं ॥ ॥ १ विस्तारितवंतौ ॥ २ पितुः ३ भयचकितः ४ हिंसनं ॥

मतः प्रतिनिवृत्ताद्वृत्तमेतदाकर्ण्य विशीर्णमानसो मानमच्चरडवधध्वनिर्घोषाद्विषादाकुलो राजहंसः संमदिनि यन्त्यसौमित्रिणा समाश्वास्य नः स
करुणं निश्वस्य विश्वम्यपतिरपि विधुरं व्यलापीत्॥ पद्यं॥ जज्ञे न दत्रभवती जनकस्य यज्ञे देव्याश्रिताय धरणे रणेः शिखीव॥ वंशे मनोरपि वधू
रभूत्किमन्यद्रामस्तवापि विधिना रचितो विरामः॥६९॥ यत्नो मुधाभवति यत्र समीरसूनोर्नालं नलोपि नवसेतुनिबंधनाय॥ दूरे च पावकशि
रा दुरतिक्रमोयं नत्केन शोकजलधिस्तवलंघनीयः॥ ७०॥ गद्यं॥ इत्यादि परिदेवमानमेनं विदितो शारमाया विशेषो विभीषणः समागत्य दे
व भवतोपि किमिदमस्थाने दीनमवस्थानं॥ निरंतराय मखनिर्वर्त्तनाय पुरंदरारिणा कृतं कार्त्रिममेतदित्यवधार्य धारय मनसि धैर्यमि
त्यभिधाय तद्धाय लक्ष्मणं तत्क्षणमेव पुरस्कृत्य निकुंभलामुपरुरोध॥ पद्यं॥ हरिकुलारवतश्चलितस्ततो गिरिदरीकुहरादिव केसरी॥
अपरिपूर्यरुषा हवमाहवं स विदधे बलशासनशासनः॥ ७१॥ वातूल इव तूलानां वानराणां रणाजिरे॥ विद्रावणस्ततो मायाविद्रावणसु



॥ टिप्पणं॥ १ राजश्रेष्ठः पक्षीच २ व्यर्थः ३ राक्षसः ४ निर्विघ्नं ५ निश्चित्य ६ हवनं॥

तोभवत्॥७२॥ गद्यं॥ अनुपदमनीकिनीनाथनिधनसंरब्धतरंसंवर्तप्रवृत्तमिवकृतांतंसमरांगणमापतंतंस्यंदनगतंतंसंक्रंदनजितंगंधवा
हनंदनस्कंधवर्तीसौमित्रिः प्रवर्तितशिततरशरधाराभिः शैतधारपाणिरिव जंभमस्तंभयत्॥ पद्यं॥ परस्परमदोत्कटंप्रचुरवीरमदोद्भटंपतत्त्रुटि
तकंकटंप्रतिहतास्त्रमस्त्रेणच॥ जगत्त्रयभयावहंजयपराजयागोचरंविनेननृमृधाविभाविघनदारुणंदारुणं॥७३॥ शैतधारकठोरशिरैर्विशि-
खैः शतधाविरचय्यशरासगुणं॥ विदधेविबुधेशजितंसमरे हतसारथिमप्यथदाशरथिः॥७४॥ यदर्चितमहोमायाशीलस्य यद्भुजशालिनःसदृश
मथवायुक्तंनक्तंचरेंद्रसुतस्ययत्॥ शतमखजितःशौर्यंयद्दानुरूपमथात्मनस्तदहृतरुषा मंदोमंदोदरीतनयोरणे॥७५॥ गद्यं॥ अनुपदमभि
षेणनवनिर्भीषणेतेन मुक्तांशक्तिमर्धचंद्रेणदारयन्नपारयन्सोढुमदसीयमविनयममर्षाकुलःसौमित्रिरमोघंमोघवतास्त्रममुंचत्॥ पद्यं॥
पततिस्मततस्थममरत्नमुज्ज्वलंसशिरस्त्रमिंद्रजयिनस्ततःशिरः॥ अनुपुष्पवृष्टिरवनौदिवौकसामथवाष्पवृष्टिरमरारियोषितां॥७६॥ श्रुत्वा

॥टिप्पणं॥ १ वज्रपाणिः २ कवचं ३ गजो ४ वज्रं ५ ऐंद्रास्त्रं॥

कोपनाथविपाटलं कुटिलितभ्रूवल्लिदृनेक्षणं जडोदष्ट 
चं॰ रा॰ शक्राजितः सुतस्यनिधनंशोकेन रक्षःपतेः क्रांतं निश्वसदश्रुपूरभरितं कंदच्च फूत्कारि च॥ कोपनाथविपाटलं कुटिलितभ्रूवल्लिदृनेक्षणं जडोदष्टशक्राजितः सुतस्य निधनं
 घनोष्ठमट्टहसितोद्धृतंसमस्तंमुखं॥ ७७॥ गद्यं॥ अनंतरमपाक्रांतासुपुर्विक्रांतेषु पुरंदरारिमुखेषु नंदनेषु निहतेषु कुंभकर्णादिषु भ्रातृषु विध्वस्तेषु प्रहस्तपूर्वेषु सचिवेषु व्यर्तीतेषु विरूपाक्षप्रभृतिषु सेनापतिषु कपिविमर्दनेन विशीर्णभवति निखिलेबले समंततः पौरवधूजनपरिदेवनोत्तरं
न्तेषु प्रहस्तपूर्वेषु सचिवेषु व्यर्तीतेषु विरूपाक्षप्रभृतिषु सेनापतिषु कपिविमर्दनेन विशीर्णभवति निखिलेबले समंततः पौरवधूजनपरिदेवनोत्तरं
गायांलंकायामातंकातिशयरोषणो रावणस्तत्क्षणमेव हर्यक्ष इव हरिणीं धर्मणीसुतां जिघांसुर्गतिकगनेन मंत्रिणा निवार्यमाणः सारथिना
विधिनाच संचादितो दाशरथिविजयविहितसंगरः संगरभुवमवततार॥ पद्यं॥ कोपादसौ परिघयष्टिकुठारकंतचापाशुगद्रुघणशक्तिकृ
वाणपाणिः॥ एकोप्यनेकमुखबाहुतयासबंधुर्लोको यथा समितिलोचनगोचरोऽभूत्॥ ७८॥ अलक्ष्यतमसंसामधिपतिः कृपाणं मुहुः नह-
स्यविनिपातयन्प्लवगमंडलीमौलिषु॥ अयंतवतवायमित्यधिमर्मकमेकैकशो वरानिवविनिर्दिशन्नमरवारवामाभुवां॥ ७९॥ गद्यं॥ तदनं ६८
॥टिप्पणं॥ १ सिंहः २ देवेन ३ ब्रह्मदेवः॥ ४ सर्वैस्मामां

तरमक्षौहिणीक्षोभकं दलितरुषमतिपरुषविशिखदलितध्वजमर्द्धचंद्रनिकृत्तधन्वानमस्त्रधारावदारितसारथिमतिविस्मयनीयकरलाघवं रा
घवानुजममर्षावेगमुक्तया शक्त्या मूहूर्तमिव मूर्छानिमीलितमुपरागइव कमलाकरमाननानयातुधानपतिः॥ पद्यं॥ आलोक्य दीनमनुजं
हरिशक्तिघाताच्छोकेन विद्धहृदयः सुतरां स रामः॥ कोपेन चापमथ कुंडलयांचकार लंकापतेरपि ललाटलिपिं विधाता॥८०॥ अवकीर्य
दाशरथिरश्रुजलैरनुजं पुलस्त्यतनुजं च शरैः॥ युगपद्व्यधात्करुणवीररसौ युधि शोकहर्षजौ बलं च बलं॥८१॥ वलयितचित्रचापविनिवा
रितपंक्तिमुखे विसृजति राघवे विशिखवर्षममर्षवति॥ अरिषु न कश्चिदप्यथ निवृत्य गतः समरादमरविलासिनीषु न च कांचिदलब्धवरा॥
॥८२॥ गद्यं॥ अयं च पुनः रंजनीसुतसमानीतमहीधरमहौषधिजीवितानुजाश्लेषसुखलब्धमनोरथः समेधमानमानसः समरकौतुकोप-
लंभसंरंभोदंचितपुलककंचुकिताछतिर्दाशरथिरधिसंगरममरसारथिनानीतमतिविशंकटं कमनीयं कंकटमप्यनुग्रहाय शतक्रतो रथ-

॥टिप्पणं॥ ॥१ छिन्नं॥ २ व्यासं॥ ३ विशालं॥

हीत्॥ पद्यं॥ अन्योन्यस्यसदृक्षलक्ष्यमिलनादालक्ष्यशौंडिर्ययोः शस्त्रास्त्रस्त्रिसमुन्मिषत्पुलकयोः सश्लाघयोः साहसे॥ जातेजीवितसंकटेपि
हसतोमूर्छांसुविश्रम्यतोरश्रांतंरघुवीरपंक्तिमुखयोरासीदसीमारणः॥८३॥ गद्यं॥ अथनयोरश्रांतमुक्तदिव्यास्त्रयोराखंडलछत्रनिभ-
योरौलूनेषुमार्गणेषु अभंगुरपरस्परविजयमार्गणेषु बाणगणेषु विच्छिन्नेषु धनुर्गुणेषु अव्याहतसहजसाहसगुणानिकृत्तेषु धुरीणेषु याने
षुनिरपायसमराभिहतिनिर्भिन्नेसांयुगीनेचरथेपरस्परगर्वकल्पविजयमनोरथमजायतभुजायतयशोधनमायोधनं॥ पद्यं॥ तूणीमु
खात्त्वरितमुद्धरणेगुणेनसंयोजनेप्यथशरस्यविमोचनेवा॥ यात्रावलोकितदशास्यइवातिवेगाल्लोकेनराघवकरश्चिरमालुलोके॥८४॥ अर्द्धो
दीरितवीरवादमहरद्रामोपदस्त्रैः क्षणात्तेनैवांकुरतासुखेनजगदेशेषंचलंकापतेः॥ साम्यमत्यपिचातुरीभिरुभयोर्दोष्कमायाविनोर्विच्छि
नाननदर्शनेनसमभूद्व्रीडारणेरावणे॥८५॥ दशाननशरक्षतिक्षरदसृग्झरीबुद्बुदैस्तरंगितमहेंद्रकंकटसहस्रचक्षुःपथः॥ रणेरघुकु-

॥ टिप्पणं॥ १ दशमुखः॥ २ छिन्नेषु॥ ३ बाणेषु॥

लोद्दहः क्षणममानि वैमानिकैर्यथा दशशतेक्षणो वलरुषा कषायेक्षणः॥८६॥ गद्यं॥ तदनु वारुणेन वैश्वानरं वैनतेयेन धौतं धय्यं वायव्येन वारि
दंनैशाकरेण तामिस्रं माहेंद्रेण दानवं वैष्णवीयेन माहेश्वरं च परस्परमेव मस्त्रमस्त्रेण भिंदानयोरनयोरनिशमाहवाग्रहाद विदितान्यहानिस
त्यतीयुः॥ पद्यं॥ शस्त्राशस्त्रि सकौतुकोपि दयितां संचिंत्य चिंताकुलामस्त्रेण ज्वलता विधेर पुनरुन्मेषं निमेषेण सः॥ मूर्ध्नः कंदलितान्मुहुर्मुहु
रवच्छेदेपि लंकापते रातें केन समं समस्तजगतां चिच्छेद सीतापतिः॥८७॥ रक्षःपतौ पतति लब्धमनोरथानामातन्वतां दिविषदामथ पुष्पवर्षं॥
श्लाघापदं समजनिष्ट परं न रामः कामोपि चाकलितशूर्पणखाविकारः॥८८॥ गद्यं॥ अनंतरमालिंगितवसुंधरं शारतल्पमधिशयानमधिगतनि
षंगोपधानं यातुधानपतिमधिगत्य निपत्य च सोदर्यो हार्यसौहार्दसुलभवैधुर्यः कौर्दर्योऽहमिति विहितनिजदूषणो विभीषणश्चिरतरं विल
लाप॥ पद्यं॥ अयि समसुखदुःखैरान्वितं बंधुवर्गैः सहजमपि भवंतं मुंचतः साहसेन॥ कुलविशसनहेतोः कूटधर्मानुवृत्तेर्दशमुख मम या

॥टिप्पणं॥ ॥१इंद्रः॥ २आरक्तनेत्रः॥३सर्पास्त्रं॥ ४विदारकयोः॥ ५अगमुः॥ ६शंकया॥ ७कृपणः॥

कज्जीवमासीत्कलंकः ॥ ८९ ॥ आर्यस्य रक्षितुमसूननुजः स एकः प्राणानमुंचत परं युधि कुंभकर्णः ॥ त्वज्जीवहेत्वयमहं मम जीवहेतोरप्यापि
हंत स हतेहतकोविधिर्मा ॥ ९० ॥ गद्यं ॥ इत्येवमस्मिन्विलपति विदितवृत्तांताशुद्धांतात्सकरुणमारटंतीभिरंतरितयूथपाभिः करिणीभि
रिव तरुणीभिः समं समापत्य मध्येसमरमापतितमशनिहतमिव मंदरं दशकंधरं समीक्ष्य निहेतोपध्रेवल्लतानि ?तंती विलपंती नाथनाथे
ति विषादाहता दयितविधुरीकृतकुररीवामंदं चक्रंमंदोदरी ॥ पद्यं ॥ या वीक्षिता जनिपुरायमराजधानी वीर त्वया निखिलदिग्विजयोत्स-
वेषु ॥ तामघ दुर्विधिबलेन समस्तलोकसाधारणः पुनरुपैप्य सिहा किमेकः ॥ ९१ ॥ जनकः स्वयं दनुजवंशनायको दयितो जगत्त्रितयजैत्रशा
सनः ॥ तनयः पुरंदरजयीति गर्विताविधिनाहमेवमधुनाविडंबिता ॥ ९२ ॥ राजन्यधर्मविदुषोपि रघूद्वहस्य हत्वा यथाग्रजमथानुजपट्टबं-
धः ॥ आरभ्य वालिनमयं कथमाविरासीदिक्ष्वाकुवंशसहजः कथमेष धर्मः ॥ ९३ ॥ अहह निहतालंकावालानलेन हनूमतः परमेवनिजा

॥ टिप्पणं ॥ १ अपकीर्तिः ॥ २ हताश्रया ॥ ३ दुर्दैवं ॥ ४ सीता ॥

पाति च त्यानलेन भवानपि॥ सुख मह मिहासीना शोकानलेन यदी दृशो भभवति न मां हंतुं प्रायः स एष चितानलः॥ ९४॥ गद्यं॥ तदह मिदानीं सायंत
न समय इव सवितुः प्रभा भगवति प्रविश्य जात वेदसि चंद्रिकेव चंद्रमसं तडिदिव तडिद्वंतं भवंत मनुसरंती निर्वापयामि निरंतर विरह दहन
दह्यमान मात्मान मित्यादि करुण परिदेवन वतीं प्रजावतीं निवर्त्य निर्वर्त्य च निशिचर पतेर्यथा विधि निजाज्ञया पितृमेध संमतं सविधमेध
मान विषादं बिभीषण मशेष राज्याधिपतिं विधातु मखिल तीर्थोपहृतैरंभोभि रंभोधर इव दावानलाकुलं वनस्पतिं रघुपति मभिषिंचत्॥
पद्यं॥ अथ दशरथ नंदनाभिषेकादधिगत राज्य पदो बिभीषणोयं॥ अनु दिनमभिवृद्ध मंडलो भूदरुण करामृत पूरणादिवेंदुः॥ ९५॥ नीता
नुदीक्ष्य निभृतेन बिभीषणेन सीता मुदार गुणशील वतीं सतीनां॥ देवस्य तत्क्षण मभूद्दशकंधरारेरानंद शोक रस बंधुरमंतरंगं॥ ९६॥
गद्यं॥ तदनंतरमरुंधतीव पवित्र चारित्र निधिरधिदेवता पतिदेवतानाम नादि पुंसोपि मर्त्य धर्मणः प्रत्यायनायनायकस्य पुरंदर मुखान्दे

॥टिप्पणं॥ १ भ्रातृजायां॥ २ सूर्यः॥ ३ देवान्॥

र्हिर्मुखान्पुरस्कृत्य नमस्कृत्य भगवंतमरविंदासनमिंदुकलेव पुनरुदेष्यंतीतपनमिव दहनमवजगाहे॥ पद्यं॥ प्राविक्षदर्चिषि परं निजशुद्धिहे
तोर्देवी पवित्रचरिता जनकेंद्रपुत्री॥ अंहश्चिरं हि यद पावनवस्तुसंगात्यक्तं स्वयं तदमुनादमुनाबभूव॥ ९७॥ विशुद्धशीलामनलानुषंगा
द्विदेहजां तत्राधिलोक्यमीनां॥ प्रभां पुनः प्रत्युषसीव पूषा प्रत्यग्रहीत्प्रायसरोरुघूणां॥ ९८॥ गद्यं॥ अथोदारधीरधिगतानिजप्रशंसाविधि
ना विधिना पुरः प्रदृश्यमानं विमानाधिगतमहारथं दशरथं प्रणिपत्य प्रतिपाल्य च शिरसि तदनुशासनं पाकशासनवरप्रत्युज्जीविते हरिभिर
नुगम्यमानः प्रमोदमानमनाः सुग्रीवेण सह संभाषमाणो विभीषणं सकरुणमवलोकयन्ननुजेन वसीतया सममयोध्यामधिगंतुकामो रामः
खेचरं विमानमारुरोह किमपि कौबेरं॥ पद्यं॥ आरुह्य पुष्पकमयं विदितानितानिल्लंकोपकंठदशकंठरणांगणानि॥ सिंधुं गभीरमपि सेतुनिबं-
धनं च संदर्शयन्मृगदृशां स जगाम रामः॥ ९९॥ उपरि यथा यथा मणिविमानमुदंचति नस्तरुणि तथा तथा विपुलतामुपयाति नभः॥ महीवल-

॥टिप्पणं॥ १ विभावसुः॥ २ ब्रम्हणा॥ ३ सीतां॥ ४ गच्छति॥

गरुडपल्वलमंबुपमल्लाव्यनिर्भिपवनभुवंनितंयवहर्मनिपरेहरन्यः॥१००॥ गद्यं॥ प्रियेविदेहराजनंदिनिविनतानंदनमप्यतिशेतेविमानवेगः
पद्य॥ यद्यदूरेपुरःपश्यसि स्वामिनवशांसिनं॥ ततदन्वगापिद्दृष्टंतल्लक्षणेनापवार्यते॥ १०१॥ गद्यं॥ तरुणिधरणीसुतेपश्यऋष्यमूकोयंविबाध
रूपंपामरइदंकबंधनिकबंधनिबंधनभूमिर्यंकरभोरुखरादिकलहस्थलमिदंमधुरालापिनिममपर्णशालेयंमत्तेभगामिनिमायामृगमृगया
वनमिदंकुटिलायतकर्णाग्गोदावरीयंकुंभिकुंभस्तनिकुंभसंभवायतनमिदंविधुमुखिविराधविध्वंसनवनमहीयंविपुलविलोचनेमहामुने
रत्रेरगश्रमपदमिदंविदेहराजपुत्रिचित्रकूटोयमितिविविधाःकथाःकथयन्नेवायंभागीरथीपरिसरगतंभरद्वाजमुनेःप्रशांतंपावनंतपोवन
मायासीत्॥ अभाषतवमैथिलीं॥ पद्यं॥ प्रसुमबर्हिनिश्वासपारणासुखितःफणी॥ कंडूविनोदनोत्कंठाकंठीरवनरेर्वैमृगः॥१०२॥ गद्यं॥
तत्रभरद्वाजविहितांविविधातिथेयःतथैवपदवींदर्शयन्नीमतीत्यपुनरयोध्यामविधमासीदन्नयनएवहनूमदावेदितोदंतंमागच्छंत

॥टिप्पणं॥ १ गरुडं॥ २ पर्यंतभूः॥ ३ सिंहः॥ ४ अतिदूरं॥ ५ वृत्तांतं॥

मरुंधती जानिपुरःसरमजस्रमानंदाश्रुजलविलुलितालोकैरमात्यलोकैः परिगतमतिपावनतपोधनव्रतमाजानभक्तिभरितं भरतमवलोक
यन्नतिवत्सलमनाविमानावरोहणाय दशकंठरिपुरुदकंठत॥ पद्यं॥ यानं मदाशयमवेत्य यथा यथैतत्तारापथादवतरत्यवनीकुमारि॥ आ
सेदुषी सविधमय तथा तथाभूरत्यादरेण भवतीमभिगच्छतीव॥ १०२॥ इत्थं वदन्निंदुमुखीं सलीलं देवः प्लवंगाधिपदत्तहस्तः॥ विभीषणावे
दितया पदव्या विमानतो मंदमवारुरोह॥ १०४॥ प्रणीतमणिपादुकं प्रणतमग्रतः पादयोरुदस्य भरतं जवादुपनयन्भुजाभ्यंतरं॥ अवेक्ष्य व्रतपः
कृशं वपुरतीव वात्सल्यतो नवं नवमिव स्पृशन्न विरराम रामश्चिरं॥ १०५॥ पश्यन्ननंदभरतः परिरभ्य दोर्भ्यां सौमित्रिमार्यसमदुःखसुखं न वे
पि॥ सोयं सुखोपनतराज्यपराङ्मुखाय तस्मै पुनः सहजभक्तिपराङ्मुखाय॥ १०६॥ गद्यं॥ अथ भरतोपि पुरतोभिवादितपूर्वजो पलालननि
घ्नेन शत्रुघ्नेन समं सविनयं प्रणिपत्य जनकेंद्रपुत्रीमुन्मनीकृत्य सुग्रीवदशग्रीवानुजादीन्सावरोधवधूकान्यथोचिताभिरुपचर्याभिर-

॥ टिप्पणं॥ ॥ १ वसिष्ठः॥

भ्यर्च्योभ्यर्चितपुरोहितमामंत्रितमंत्रिलोकमालोकानुगृहीतपौरवर्गमग्रजन्मानं विमानत एव सबहुमानमनयदपनीतजनपरिश्रमं निजा
श्रमं॥ तत्र च सौमित्रिसीतासखो दाशरथि गतिलोभनीयवात्सल्यां कौसल्यामयशःशल्यजनितशोकातिरेकां कैकेयीमकृत्रिमस्नेहपरिष्वक्ता
सुमित्रामपि क्रमादभिवादयन्निजालोकरसनितांतकंदलितांतरंगाभिरेताभिश्चंद्र इव पयोधिवीचिकाभिः प्रतिक्षणं परिरभ्यमाणाभिः सल
क्ष्मणः केवलमानंदधुरमविंदत॥ पद्यं॥ अथाखिलजगत्पतेरपि रघूद्वहस्यादराद्विधातुमभिषेचनं विचलता गुरोराज्ञया॥ अनीयत समं
ततो हरिगणेन तीर्थपुनर्विशंक्य हृदि मंथरां न भजता गतिं मंथरां॥ १०७॥ अलंकृतः कृतमभिषेकमादरादमात्यसंहतिभिरवाप्य राघवः
पुरोन्मुखः पुनरयमानशे रथं मनोरथं स च भरतो महारथः॥ १०८॥ ग॰॥ तत्र च सेवाविचक्षणाभ्यां लक्ष्मणशत्रुघ्नाभ्यामभितो विधूयमान धवल
वालव्यजनः परिजनाचारनिरतभरनोदस्तमणिविमलमुक्तातपत्रो विचित्रोपजातमनुजवेषचारुभिरारूढशैतांगमातंगैरलंकृते

॥टिप्पणं॥ ॥ १ सहचरः॥ २ रथः॥

राशेरप्लवंगपतिभिरनुगम्यमानः प्रवर्त्यमानशेषाक्षतकुसुमलाजोपचारपौरपुरंध्रीकदंबसंरंभचलितमंजुमंजीरमणिकांचीवलयवा
चाटितदशदिगंतरांवाद्यमानमांगलिकभेरीमृदंगशंखवादिकविविधारवश्रवणसमयोच्चलितसामोदपौरसंबाधांसौधांतरगवाक्षच
लिततरुणीकटाक्षलेखानीलोत्पलदामतोरणाभिरामरथ्यां तथाविधामयोध्यामाजगाम रामचंद्रः॥ पद्यं॥ राज्यं स्वं समुपेयिवान्सवि
नये रासे चितो भ्रातृभिः सुग्रीवप्रमुखानपि प्रियसखान्स्वे स्वे पदे स्थापयन्॥ स्वच्छंदः सुचिरं सुखान्यनुभवन्देव्या तयासीत्तया रामः पाल
यति स्म कीर्तिविभवैरामोदिनीं मेदिनीं॥ १०९॥ कोलालाख्यमहाग्रहारमहिताकल्पेन संख्यावतां मूर्द्धन्येन विशारदेन विधुना श्रीसोमनाथो
दये॥ प्राग्भोजोदितपंचकांडमहितानंदे प्रबंधे पुनः कांडो निर्मित एकचूतपतिना षष्ठोपि जीयाच्चिरं॥ ११०॥ ७ ॥ ७
इति श्रीलक्ष्मणकविविरचिते चंपुरामायणे युद्धकांडः समाप्तः॥ ॥ काव्यालंकारशालास्थद्वितीयगुरुणा स्वयं॥ भोजीयचंपुष-

॥ टिप्पणं॥ ॥१ राक्षसः॥

ढुंढीशोधितेयं यथामति ॥ १ ॥ वेदाश्वसप्तेंदुमिते शाके पुण्याख्यपत्तने ॥ यत्नतः पाठशालायामंकितेयं शिलाक्षरैः ॥ १ ॥ ५ ॥ ॥

